# परमार्थसुधा

## ( त्रैमासिक-संस्कृत-पत्रिका )

वर्षश्चतुर्थः * अङ्का द्वितीयतृतीयचतुर्थाः
पौषतो भाद्रपदं यावन्मासाः
संवत्सरः-२०३६-३७

सम्पादकः — श्रीसत्यनारायणशर्मा
सहसम्पादकः — श्रीवासुदेवद्विवेदी शास्त्री

प्रकाशकः

श्रीसोहनलालः

मन्त्री, परमार्थन्यासः

मुड्हू, राँची ( विहार )

•

प्राप्तिस्थानं, पत्र-लेख-मूल्यादि-प्रेषणसङ्केतश्च—

श्रीविद्याधरद्विवेदी

व्यवस्थापकः – परमार्थसुधा

सार्वभौम-संस्कृत-प्रचार-कार्यालयः

डी० ३८।११०, हौजकटोरा, वाराणसी

( उत्तर-प्रदेशः ), दूरभाषः – ६६०२१

•

वार्षिकं मूल्यम्—दश रूप्यकाणि

विदेशेषु – दश डालराणि

•

मुद्रकः

बैजनाथ प्रसाद

कल्पना प्रेस

रामकटोरा रोड, वाराणसी।

# विषया लेखकाश्च





# परमार्थसूक्तयः

---

## आनन्दमयं जीवनम् ।

( १ )

वसन्त इन्नु रन्त्यो ग्रीष्म इन्नु रन्त्यः ।
वर्षाण्यनु शरदो हेमन्तः शिशिर इन्नु रन्त्यः ॥

( २ )

स्योना पृथिवि भव, अनृक्षरा निवेशनी ।
यच्छा नः शर्म सप्रथः ॥

( ३ )

भूमे मातर्निधेहि मा भद्रया सुप्रतिष्ठितम् ।
संविदाना दिवाऽकवे श्रियां मा धेहि भूत्याम् ॥

( ४ )

स्वादो पितो मधो पितो वयं त्वा ववृमहे ।
अस्माकमविता भव ॥

( ५ )

उप नः पितवाचर शिवः शिवाभिरूतिभिः ।
मयोभुरद्विषेण्यः सखा सुशेवो अद्वयाः ॥

—ऋग्वेदात्

# प्रतीच्ये जगति आन्वीक्षिकीविषयकं विमर्शनम्

□

श्रीसत्यनारायणशर्मा

□

संसृतेरनवबोधकुज्झटिकापरिवृतं रहस्यमुद्घाटयितुं व्याकर्त्तुञ्च सभ्यताया महति प्रत्यूते खलु भारते वर्षे बहुकृत्वश्चिचेष्टिर इति ऐतिह्यविदामगोचरं नास्ति। जनिमृत्योर्विविधतापान्मुमुह्यमाणा आत्यन्तिकदुःखोपशमामपुनरावृत्तिं जिगमिषन्तः सम्यक्तया सर्गममुं दिदृक्षन्तस्तत्त्वानुचिन्तका प्राक्तने भारते बहुशतकं यावत् तपःपूर्वं चिन्तयाञ्चक्रिरे; नानामकरसंकुलितं भवाब्धिं तरीतुं संस्कारानुपूर्वा विविधास्तरण्यश्चालिताश्च। औडुपिकानां चेष्टितानि इमानि दर्शनं, तत्त्वज्ञानं, तत्त्वचिन्तनं, तत्त्वविद्येत्यादिभिर्नामभिर्व्यपदिश्यन्ते। इत्थम्भूतानां विदुषामपि अभावो नास्ति यैः सन्दर्भेऽस्मिन्नान्वीक्षिकीति शब्दः प्रयुज्यते।

ननु आन्वीक्षिकीति शब्दस्य कोऽर्थः? तत्त्वानुसन्धित्सुभिः पूर्वसूरिभिः प्राक्तने भारते शब्दोऽयं कस्मिन्नर्थे व्यवहृतः? इदानीन्तनः प्रयोगस्तु प्रेक्षावतां दृष्टेरगोचरो नास्ति। न केवलं विद्वद्वरेण्यैः, समधीतशब्दशास्त्रैरपि विचक्षणैरान्वीक्षिकीति पदस्य एवंविधः प्रयोगोऽसाम्प्रतं न मन्यते। आचार्ययाकोबीसदृशः कृतभूरिश्रमः संस्कृतविशारदोऽपि प्रतीच्ये जगत्यर्थममुं निर्विचिकित्सं प्रतिजग्राह। गच्छता कालेन वाढ़ं बहूनां शब्दानामर्थः परिणम्यते विस्तीर्यते प्रयोगश्चेद् वरीवृध्येत। किन्तु प्राक्तने भारते विपश्चित आन्वीक्षिकीति शब्दं कस्मिन्नर्थे प्रयुयुजिर इत्यनुसन्धित्सा शब्दशास्त्रमध्येतुकामानां कृतेऽगुर्वर्था किल नास्ति।

वेदान्तग्रन्थपरिशीलननिवेदितधिय आचार्यहक्करस्य दृष्टिः शब्दस्यास्य प्राक्तनप्रयोगमन्विष्यन्ती कौटिलीयार्थशास्त्रे विहिते प्रयोगे न्यपतत्। आचार्यकौटिल्येन ग्रन्थस्य उपोद्घाते चतस्रो विद्या व्यपदिश्यन्ते। विनयाधिकारिके प्रथमेऽधिकरणे विद्यासमुद्देशे द्वितीयोऽध्याय आन्वीक्षिकीति संज्ञितः। विद्यासमुद्देशार्थं प्रणीते प्रकरणेऽस्मिन्नाचार्योऽसौ आन्वीक्षिकीं, त्रयीं, वार्त्तां, दण्डनीतिञ्च विद्यारूपेण अभिदधे। ग्रन्थस्य प्रतिपाद्यन्तु केवलं दण्डनीतिरस्ति, तथाप्यपरविद्याः परिचिचापयिषता तेनान्वीक्षिकीति शब्दस्यार्थो व्याचचक्षे। अन्येषामप्याचार्याणां मतं निर्दिशन् स स्वकं मतं व्यञ्जयाम्बभूव। मानवाः केवलं त्रयीं, वार्तां, दण्डनीतिञ्च विद्यात्वेनाभिदधुः। त्रयीविशेषो ह्यान्वीक्षिकीति। बार्हस्पत्यास्तु वार्तां दण्डनीतिञ्च केवलं मेनिरे। औशनसास्तु दण्डनीतिमेवैकां विद्यां प्रतिजगृहुः, परमाचार्यकौटिल्यस्य मते तु चतस्र एव विद्यारूपेण अवगन्तव्याः। ननु विद्यानामेतासां चिकीर्षितं किम्? प्रयोजनमनुद्दिश्य न मन्दोऽपि प्रवर्त्तत इत्युक्तिस्मरणात्। आचार्यकौटिल्यस्य मते प्रयोजनं धर्मार्थयोरवगन्तव्यम्। विद्यानामासां विद्यात्वविवक्षया ताभिर्धर्मार्थौ

यद्विद्यात्तद्विद्यानां विद्यात्वमित्यस्मिन् व्याहारे चतुर्षु पुरुषार्थेषु काममोक्षौ विजानता पर्यहारिषाताम्। अन्यत्र सप्तमेऽध्याये काममपि ग्रन्थकारः पुरुषार्थत्वेन निरदिक्षदर्थस्य तावद् प्राधान्यं चिकथयिषमाणः।

ननु आन्वीक्षिकी कथम्भूता विद्याऽस्ति अर्थशास्त्रकारस्य मते सांख्यं योगो लोकायतं चेत्यान्वीक्षिकी। एतदूर्ध्वमान्वीक्षिक्याः प्रक्रियां व्याचिख्यासुः स विशदीकृतवान् धर्माधर्मौ त्रय्यामर्थानर्थौ वार्त्तायां नयापनयौ दण्डनीत्यां बलाबले चैतासां हेतुभिरन्वीक्षमाणा लोकस्योपकरोति व्यसनेऽभ्युदये च बुद्धिमवस्थापयति प्रज्ञावाक्यक्रियावैशारद्यं च करोतीति हेतुभिरन्वीक्षमाणां विद्यामिमां परिसमाप्तिश्लोकेन ईडानो द्वितीयाध्यायमर्थशास्त्रकृत्समापयाञ्चक्रे—

प्रदीपः सर्वविद्यानामुपायः सर्वकर्मणाम्।
आश्रयः सर्वधर्माणां शश्वदान्वीक्षिकी मता॥

———

## ( २ )

प्रतीच्यजगतः संस्कृतविद्वत्सु लब्धप्रतिष्ठ आचार्ययाकोबिविंशशतकस्य प्रभाते एकादशाधिकनवशताधिकसहस्रतमे खिस्ताब्दे पुराकालिक्या भारतीयतत्त्वविद्याया इतिवृत्तमधिकृत्य आन्वीक्षिकीति शब्दं विस्तरेण परिशीलयाञ्चक्रे। अमुनाऽन्वीक्षिकीविद्या दर्शनविद्येति विभाविता। ननु केन हेतुना प्रतीच्यजगति संस्कृतगवेषकैर्बहु समादृतः कृतभूरिश्रमो विद्वानसौ पदमिदं दर्शनविद्यायाः समानार्थकममंस्त? आचार्यहक्करस्योत्तरमत्र विस्पष्टम्। सांख्यं योगो लोकायतञ्च दर्शनान्तर्भूतानि सन्ति। सांख्यं योगो लोकायतं चेत्यान्वीक्षिकीत्यत्र इतिशब्दप्रयोगादेवाऽर्थनिष्पत्तिः। परन्तु ग्रन्थेऽस्मिन्नपरत्रापि पदमिदं वीक्ष्यते। तदविचार्यैव खलु अर्थनिष्पत्तिरेषा शक्येत्याचार्यहक्करस्य मतम्।

अर्थशास्त्रकृता एकतः सांख्ययोगलोकायतेभ्यः पदमिदं प्रयुयुजेऽन्यतस्त्रयीवार्त्तादण्डनीतिभिः सह। बलाबले चैतासां हेतुभिरन्वीक्षमाणेति व्याहारोऽर्थविनिश्चयार्थं मनसि निधातव्यः। प्रतीच्ये जगति तत्त्वविद्यायै दर्शनशास्त्राय वा व्यवहृतः शब्दस्तु कुत्रापि अर्थेऽस्मिन् न व्यवह्रियते। आचार्यहक्करस्य दृष्टावर्थशास्त्रकारस्य विचारसरणिरियं भारतीयदृष्ट्याऽपि विस्माययति। तस्य मते सांख्ययोगौ लोकायतमतञ्चान्वीक्षिकीमन्तर्भवन्ति सा च त्रयीवार्त्तादण्डनीतिषु हेतुभिरन्वीक्षते। सञ्जातविस्मय आचार्यहक्कर पृच्छति—त्रीणि एव किल दर्शनानि तिसृणां विद्यानां क्षेत्रेषु सम्प्रयुज्यन्त उत दर्शनविशेषेण काचिद् विद्याऽन्वीयते? उभावेव तर्कावनुपपन्नौ। सांख्ययोगशास्त्रयोरर्थशास्त्रेण राजनीत्या वा सम्बन्धः किलादृष्टपूर्वः। आचार्यः कौटिल्यस्तु वर्णाश्रमविभागं गुरुप्रयोजनं मेने। त्रयीधर्मस्यौपकारिकत्वं प्रतिपाद्य वर्णानामाश्रमाणाञ्च कर्त्तव्यानि यथार्थं संसूच्य वर्णाश्रम-

योमेंहिमानमतो ख्यापयाम्बभूव । स्वधर्मः स्वर्गाय आनन्त्याय च भवतीत्याचार्यं कौटिल्यः । स्वधर्मे निधनं श्रेयः परधर्मो भयावह इति श्रीभगवद्वचनमेवार्थशास्त्रकृदत्र अनुससार ।

तस्मात्स्वधर्मं भूतानां राजा न व्यभिचारयेत् । स्वधर्मं सन्दधानो हि प्रेत्य चेह च नन्दति ।।
व्यवस्थितार्थमर्यादः कृतवर्णाश्रमस्थितिः । त्रय्या हि रक्षितो लोकः प्रसीदति न सीदति ।।

सांख्ययोगयोर्वर्णाश्रमव्यासङ्गस्याश्रुतपूर्वतां निर्दिशन्नाचार्यहक्करो दर्शनग्रन्थानभिप्रैति, न तु पुराणेतिहासान् ।

अध्यात्मशास्त्राणि अवहेलयतां लोकायतानान्तु कथैव का । अक्षजमेव मानं मन्यमानानामिहत्यं सुखमेव सुखमित्याकलयतां जगदीश्वरं निर्वृतिञ्च निराकुर्वाणानां लोकायतमतावलम्बिनां कृते तु धर्माधर्मयोः प्रश्न एव कुतः ? तेषां मतं हरिभद्रसूरिणा सुष्ठु प्रपञ्चितम्—

पिब खाद च जातशोभने, यदतीतं वरगात्रि तन्न ते ।
नहि भीरु गतं निवर्त्तते, समुदयमात्रमिदं कलेवरम् ।।
तस्माद् दृष्टपरित्यागाददृष्टे च प्रवर्त्तनम् ।
लोकस्य तद्विमूढत्वं चार्वाकाः प्रतिपेदिरे ।।

आचार्यहक्करस्य मते तेषां दण्डनीतिवार्त्ताविषयकमप्यौदासीन्यं खल्वभ्युपगन्तव्यम् । ग्रन्थास्तु लौकायतिकाः कालयोगेन दृग्विषयतामतीयुस्तथापि सांख्यं योगो लोकायतञ्चान्वीक्षिकीति व्याहारेण धर्माधर्मौ त्रय्यामर्थानर्थौ वार्तायां नयापनयौ दण्डनीत्यां बलाबले चैतासां हेतुभिरन्वीक्षमाणेति व्याहारस्य आन्वीक्षिकीति शब्दस्यार्थनिर्धारणार्थं व्युत्पत्तिरपि अवधातव्या । ननु शास्त्राणामध्ययनानन्तरं समधीतस्य विषयस्य ईक्षाऽर्थात् परीक्षणम् । साऽन्वीक्षा भवति । अन्वीक्षेयं प्रयोजनमस्या अस्माद्धेतोरर्थेऽस्मिन् ठञ् ङीप् चेति प्रत्ययौ संयोज्य आन्वीक्षिकीति शब्दो निष्पद्यते ।

प्रतीच्ये जगति जर्मनदेशीयगवेषकैर्याकोबिग्लाजनापहक्कराभिधैः पदमिदमधिकृत्य यदीहितच्छब्दशास्त्रमध्येतुकामैर्विमर्शयितव्यम् । एकोनविंशत्यधिकनवशताधिकसहस्रतमे ख्रिस्ताब्दे गवेषको याकोबिमूर्योऽपि स्वमतं प्राचीकटत् । धर्माधर्मौ हेतुभिरन्वीक्षमाणयाऽऽन्वीक्षिक्या लोकायतमतस्य संगतिमपश्यन्नसौ लोकायतपदं व्याचचक्षे, जैनानां सूत्रकृताङ्गेन सम्प्रेरितः सन् । ननु लोकायतमिति पदादाचार्यः कौटिल्यः किं विवक्षति ? यावज्जीवेत् सुखं जीवेत् ऋणं कृत्वा घृतं पिबेदिति उपदिशन्नमरणधर्माणमात्मानं निरस्यंल्लोकायतमतमर्थशास्त्रकृतोऽभीप्सितं : नासीदित्याचार्ययाकोबिरमंस्त । व्याख्येयमाचार्यहक्करस्य दृष्टौ नादरमर्हति । पुण्यपापयोः फलममन्वानानां लौकायतिकानां तु कथैव का, सांख्ययोगशास्त्रयोरपि वर्णाश्रमयोर्विवेचनमनुपलभ्यत इत्यस्माद्धेतोराचार्यहक्करस्य मते व्याख्येयं प्रमाणपदवीं नावगाहते ।

लब्धकीर्त्तिः सांख्यानुशीलयिता गार्बे स्वके सांख्यदर्शनाख्ये ग्रन्थे, ऑटो स्ट्राउसो भारतीय-

दर्शनाख्ये ग्रन्थे सन्दर्भेऽस्मिन् याकोबिमतमश्रयताम् । तस्य सदोषतामपश्यदाचार्यंग्लाजेनापः । स भारतीयचिन्तनस्य विकासक्रम इत्याख्ये प्रबन्धे याकोबेर्मतमवगणय्य प्रकृतविषययोरन्योन्यनैरपेक्ष्यमवलोक्य अपृच्छत्—तस्मिन् सांख्ययोगयोर्ग्रन्थेऽर्थशास्त्रं राजनयो वा वर्ण्यते ? तदनुसारं सांख्ययोगलोकायतेभ्यः कौटिल्यस्य विवक्षितमस्ति सत्यान्वेषणस्य विभिन्नाः सरण्यो, न तु परिणतानि दर्शनानि । सांख्ययोगलोकायतानां तत्त्वानुचिन्तनपद्धतीनां क्षेत्रविशेषतां प्रतिपाद्यानुसन्धाताऽसौ तासां समाहाराद् सर्वविद्याप्रदीपत्वं सर्वकर्मणामुपायत्वं सर्वधर्माणामाश्रयत्वमिति अर्थशास्त्रकारस्य भणितिं व्याचिख्यासति । आचार्यहक्करस्य दृष्टौ व्याख्येयमर्थबाह्या, याकोबेर्व्याख्याया अपि असौकर्याद् भ्रान्तिपर्यवसितत्वाच्च । ननु आचार्यकौटिल्यस्तिस्रः पद्धतीः लक्षयाञ्चकार किम् ? मैवम् । इति शब्दादेकस्या आन्वीक्षिक्या निर्देशो ग्राह्यः । हेतुभिरन्वीक्षमाणेति पदे अपि न विस्मर्त्तव्ये ।

आचार्यग्लाजेनापः सांख्ययोगौ विवृण्वन् पुरातनसांख्यस्य गणनापरत्वं योगस्य च ध्यानाभ्यासपरत्वञ्चामनिष्ट । आन्वीक्षिकीति पदस्य व्याख्यया गणनापरकताया ध्यानाभ्यासविशेषताया वा संगतिः कथं सम्भवतीत्याचार्यहक्करः पृच्छति । सांख्ययोगलोकायतानां क्षेत्रविशेषताऽप्यमुष्य मतेऽतर्कसहा । राजनये अर्थशास्त्रे वा सांख्ययोगौ व्यापृतावास्तां, लोकायतमतं वेदशास्त्रे वेत्याचार्यग्लाजेनापस्तु प्रत्यादिक्षत्, परं लोकायतमतं राजनयेऽर्थशास्त्रे वा सांख्ययोगौ च वेदशास्त्रे व्यापृता आसन्नित्यत्रासौ तूष्णीमस्थात् । आचार्यहक्करस्तु सम्भावनामिमामपलपति ।

———

## ( ३ )

आचार्यकौटिल्यानुसारं मानवास्त्रयीं वार्त्तां दण्डनीतिञ्च विद्यां मेनिरे । कामन्दकीयनीतिसारादपि व्याहृतेरस्याः पुष्टिर्भवति । आन्वीक्षिकी तु विशेषाऽऽसीत्, कामन्दकस्तां विभाग इति संजज्ञौ, वेदविद्यायाः । आचार्यहक्करस्य मते हेतुभिरन्वीक्षमाणा विद्येयं परिवर्त्तिनि काले आत्मविद्येति संज्ञां प्राप । नीतिसारे द्वितीयाध्याये कामन्दक आन्वीक्षिकीमात्मविज्ञानरूपेण निर्दिश्य पदमिदमित्थं व्युत्पादयाम्बभूव—

अन्वीक्षिक्यात्मविद्या स्यादीक्षणात्सुखदुःखयोः ।
ईक्षमाणस्तया तत्त्वं हर्षशोकौ व्युदस्यति ॥

मनुस्मृतौ सप्तमाध्यायेऽप्यान्वीक्षिकी स्त्रीलिङ्गे आत्मविद्यां परिच्छिनत्ति । भूभृद्भिश्चतस्रो विद्या अध्येतव्या लोकस्य सम्यक्शासनार्थं नैजधर्मस्य सुष्ठु पालनार्थञ्च ।

त्रैविद्येभ्यस्त्रयीं विद्यां दण्डनीतिञ्च शाश्वतीम् ।
आन्वीक्षिकीमात्मविद्भ्यो वार्त्तारम्भांश्च लोकतः ॥

मनुस्मृतेरन्यस्मिन् संस्करणे आन्वीक्षिकीञ्चात्मविद्यामिति पाठभेदो वीक्ष्यते। कुल्लूकभट्टस्तु आन्वीक्षिकीं श्लोकेऽस्मिन् विशेषणरूपेणापश्यन्नुभयोरनायत्ततां प्रतिपादयाञ्चक्रे। आन्वीक्षिकी तर्कविद्या स्यादात्मविद्या तु ब्रह्मविद्या। आचार्यहक्करस्य दृष्टौ व्याख्येमविचारसहा। चतसृणां विद्यानां स्थाने पञ्च विद्या इत्थमापद्यन्ते। चेत्यव्ययमप्यव्याख्येयं भवेत्। मेधातिथिस्तु पदद्वयमिदमधिकृत्य विशेषणविशेष्ये वा पदे इति व्याचष्टे। अपरत्रापि कृतिनां ग्रन्थेषु इत्थम्भूतः प्रयोगस्तु दरीदृश्यते। न्यायवार्तिकतात्पर्यटीकायां संशयच्छेदि ाण्डितो वाचस्पतिमिश्रः 'न च वाच्यमस्तु विद्यात्रयमेव कृतमान्वीक्षिक्या विद्ययेति, एतस्या एव समस्तविद्याप्रदातीकरणहेतुत्वात्' इत्यत्रान्वीक्षिकीं विशेषणरूपेण प्रयुयुजे। वाल्मीकीयरामायणेऽप्ययोध्याकाण्डे बुद्धिमान्वीक्षिकीमिति पदयोरान्वीक्षिक्या विशेषणत्वं बुद्धेश्च विशेष्यत्वं हस्तामलकवत् स्पष्टम्। सन्दर्भेऽस्मिन्नाचार्यहक्करः पदस्यास्य प्रयोगं दिदर्शयिषन् न्यायमञ्जर्यां जयन्तभट्टस्य आन्वीक्षिकं शास्त्रमिति पदे अपि निर्दिशति।

शुक्रनीतावपि प्रथमाध्याये आन्वीक्षिकी आत्मविद्येति निगद्यते। नीलकण्ठस्य टीकायां कवीनामुपजीव्यस्य महाभारतस्य राजधर्मपर्वणि प्रयुक्तमान्वीक्षिकीतिपदं ज्ञानकाण्ड इति पदेन त्रयीति पदं कर्मकाण्ड इति पदेन व्याचक्षाते। अन्यस्मिन् श्लोके प्रयुक्तमान्वीक्षिकीतिपदं व्याचिख्यासुः प्रथितयशः टीकाकारोऽयं वेदान्ताभ्यसिषूणां कृते सबहुमानं प्रयुक्ते श्रवणमनने स्मारयति।
'श्रवणमनु युक्त्याऽऽलोचनमन्वीक्षा मननं तत्प्रधानामान्वीक्षिकीमिति।'

ननु महाभारतस्य टीकयाऽऽसिन्धुहिमाचलब्धकीर्तिर्नीलकण्ठ एवान्वीक्षिकीं सर्वप्रथमं मननेन सममांस्तीद् किम् मैवम्। षड्दर्शनानां बहुविश्रुतटीकाकृत्सर्वतन्त्रस्वतन्त्रो वाचस्पतिमिश्रो न्यायवार्तिकतात्पर्यटीकायामुद्द्योतकरविनिर्दिष्टं निःश्रेयसस्य परापरभावं व्याचिख्यासुश्चतस्रः प्रतिपत्तीर्विवृणोति। "चतस्रो हि प्रतिपत्तयः प्रमेये आत्मादौ, प्रथमा तावदागमाद् यामाचक्षते श्रवणमिति। द्वितीया तु श्रुतस्य परीक्षा न्यायेनैवावस्थापनं यामाहुर्मननमिति। सा चान्वीक्षिक्यामायतते। आन्वीक्षिकी च संशयादितत्त्वज्ञापनं प्रमाणतत्त्वज्ञापनायोपादत्ते। प्रमाणतत्वज्ञापनं च हेयोपादेयभेदव्यवस्थितप्रमेयतत्वपरिज्ञापनाय। तत्राप्याद्यन्तवर्जितदशवर्गज्ञापनेनाद्यन्तयोरेवात्मापवर्गयोरुपादेययोस्तत्त्वज्ञानस्योपकरोति। न चायमान्वीक्षिकीविद्यावधृतप्रमेयतत्वोऽपि परितुष्यति पूर्ववदेवात्मादिगतविपर्य्ययवासनानुवृत्तेरिति।' वात्स्यायन उद्योतकरश्चोभावान्वीक्षिकी न्यायनयमिति निरूपयाञ्चक्रात इति वाचस्पतिमिश्रोऽत्र व्यस्मार्षीदित्याचार्यहक्करः।

विपश्चितां ग्रन्थेषु बहुकृत्व आन्वीक्षिकी किल न्यायविद्येति न्यगद्यत। षड्दर्शनपारावारपारीणो वाचस्पतिमिश्रस्तु स्वयमनेकस्मिन् स्थलेष्वेवं परिबभाषे। सन्दर्भेऽस्मिन्नर्थविपर्यासं निराचिकीर्षुराचार्यहक्करः शब्दस्यास्य व्यपगतदोषमर्थं विनिश्चेतुमनाः स्मृतीनां नीतिग्रन्थानां, काव्यशास्त्राणाञ्च प्रयोगं पर्यैक्षिष्ट। कियन्निदर्शनानि सन्दर्भेऽस्मिन्नन्यथागृहीतस्य शब्दस्यास्य दुरवधारणत्वं लघयिष्यन्ति।

याज्ञवल्क्यस्मृतावाचाराध्याये नृणां पातुरदीर्घसूत्रतां स्मृतिमत्तामक्षुद्रतामपरुषतां वशीकृतेन्द्रियतां पैशुन्यादिदोषराहित्यञ्च प्रबोधयन् स्मृतिकारस्तस्यान्वीक्षिक्यां विनीततां खल्वभिदधे।

स्वरन्ध्रगोप्ताऽऽन्वीक्षिक्यां दण्डनीत्यां तथैव च।
विनीतस्त्वथ वार्त्तायां त्रय्यां चैव नराधिपः॥

ननु श्लोकेऽस्मिन् महर्षिरान्वीक्षिकीतिपदात् किं बोधयाम्बभूव? विज्ञानेश्वरो मिताक्षराख्यायां टीकायामान्वीक्षिकीमात्मविद्यात्वेन व्याचष्टे। दण्डनीतिमर्थयोगक्षेमोपयोगित्वेन वार्त्तां कृषिवाणिज्यपशुपालनत्वेन, धनोपचयहेतुभूतत्वेन च। मित्रमिश्राभिधोऽपरष्टीकाकारः श्लोकेऽस्मिन्नान्वीक्षिकीं तर्कविद्येति व्यजिज्ञपत्। 'आन्वीक्षिक्यां तर्कविद्यायां, दण्डनीत्यामर्थशास्त्रे वार्त्तायां कृषिवाणिज्यादिवर्तनहेतुभूतायामिति।'

ननु हेतुमदर्थं व्याचिख्यास्वोष्टीकाकारयोर्व्याख्ययोरेतावदर्थवैषम्यं किंहैतुकम्? दण्डनीतेश्च वार्त्तायाश्चैहिकाभ्युदयसाधकत्वादान्वीक्षिक्याश्च श्रेयोऽभिधायकत्वाद्धेतुमद्भिरेवमप्यवधियते स्म।

कामन्दकीयनीतिशास्त्रे प्रयुक्तमान्वीक्षिकीति पदं टीकाकृतामनुमानविद्या, न्यायदर्शनवैशेषिकादिकेति व्याख्यातम्। याज्ञवल्क्यस्मृतौ प्रथमाध्याये राजधर्मप्रकरणे षट्त्रिंशत्तमं श्लोकं विशदयँष्टीकाकारो विश्वरूपः समस्तसांदृष्टिकनिरूपणक्षमा हेतुविद्येति व्याचचक्षे। विदुषां बहुमतेऽमरकोषेऽप्यान्वीक्षिकी तर्कविद्येति निगद्यते। आन्वीक्षिकी दण्डनीतिस्तर्कविद्यार्थशास्त्रयोरिति। तर्कन्यायौ तु समानार्थं द्योतयतः। अर्थविपर्ययपरिजिहीर्षयाऽऽचार्यहक्करो लब्धकीर्तेर्विद्वत्तल्लजस्य मधुसूदनसरस्वतेः प्रस्थानभेदेऽपि विहितं प्रयोगं प्रति शब्दशास्त्रानुसन्धित्सूनां ध्यानमाचिकृक्षत् यत्र दर्शनशास्त्रनिष्णातोऽसौ संन्यासी आन्वीक्षिक्या न्यायशास्त्रपर्यायतां द्रढयाम्बभूव, प्रमाणप्रमेयादिषोडशपदार्थानामुद्देशलक्षणपरीक्षाभिस्तत्त्वज्ञानं तस्याः प्रयोजनमिति प्रतिपादयन्। गौतमेन प्रणीता पञ्चाध्यायीति त्रिभिः शब्दैर्द्वैविध्यं खलु निरस्यते।

---

## (४)

आन्वीक्षिकीति पदान्नु पुराकालिकग्रन्थकाराः किं व्यञ्जिजिषन्ति स्म? टीकाकृतां व्याख्यानामितरत्वात् किं खलु विभाव्यम्? आचार्यहक्करस्य दृष्टावितथम्भूता अपि प्रसङ्गा अनादरं नार्हन्ति यत्रोभावर्थौ—आत्मविद्या तर्कविद्या च–समाह्रियेते। मानवधर्मशास्त्रस्य वात्स्यायनभाष्यस्य चोभे पारम्परीणे अर्थविद्ये अत्रैकीभवतः टीकाकृतः। स्वं स्वं परिवेशसंस्कारमनुसरन्तः प्रमापुरःसरमर्थमभिनिविशन्ते स्म। आत्मविद्येति व्याख्या तर्कविद्येति व्याख्यां सर्वतोभावेन प्रत्यवतिष्ठत इति चेन्न। अतस्त्वर्थसन्निकृष्टतां मनसि निधाय प्रकृतप्रसङ्गमविस्मृत्य अवितथार्थः खलु प्रापणीयः।

शुक्रनीतौ प्रथमाध्याये वेदान्ताद्यामान्वीक्षिक्यां तर्कशास्त्रं प्रतिष्ठां लेभ इत्याचार्यान्तरवचनमत्रावधेयम्। राजनीतिप्रकाशे मिश्रमिश्रोऽपि द्वयोरेवार्थयोः समाहारं विधित्सुर्वेदाद्यविरुद्धात्मज्ञानोपयोगिनी न्यायविद्येत्यान्वीक्षिकीं व्याचष्टे। न्यायभाष्ये वात्स्यायनो महाभारतस्य टीकायां नीलकण्ठश्चोभावेव व्युत्पन्नमती आन्वीक्षिकीं विशदयाम्बभूवतुः। प्रतिपाद्यवैलक्षण्यात् पृथक्प्रस्थानाश्चतस्रो विद्या निर्दर्श्य नैयायिकशिरोमणिर्वात्स्यायन आन्वीक्षिकीं न्यायविद्येत्युदाजहार। 'यासामान्वीक्षिकी चतुर्थीयं न्यायविद्येति।' ननु न्यायविद्येति पदात् भाष्यकारस्याभीप्सितं किम्? संशयमुच्छेत्तुं भाष्यकारः न्यायस्यार्थं व्याचक्षे। 'कः पुनरयं न्यायः। प्रमाणैरर्थपरीक्षणं न्यायः। प्रत्यक्षागमाश्रितमनुमानं साऽन्वीक्षा। प्रत्यक्षागमाभ्यामीक्षितस्यान्वीक्षणमन्वीक्षा। तया प्रवर्त्तत इत्यान्वीक्षिकी न्यायविद्या न्यायशास्त्रम्।' अमुमेवार्थमभ्युपगच्छन् वृत्तिकारो विश्वनाथोऽप्यान्वीक्षिकीं स्ववृत्तौ साधु व्युत्पादयाम्बभूव। 'श्रवणादनु पश्चादीक्षाऽन्वीक्षा, उन्नयनम्, तन्निर्वाहिका सेयमान्वीक्षिकी न्यायतर्कादिशब्दैरपि व्यवह्रियत इति।' अमरकोषस्य टीकायां क्षीरस्वामिनो व्युत्पत्तिमपि सन्दर्भेऽस्मिन् आचार्यहक्करो निर्दिशति। 'प्रत्यक्षागमाभ्यामीक्षितस्य पश्चादीक्षणम् अन्वीक्षा; सा प्रयोजनं यस्या इति।' महर्षेः पाणिनेरष्टाध्याय्याः पञ्चमाध्यायस्य प्रथमपादस्थं नवाधिकशततमं प्रयोजनमिति सूत्रमपि प्रसंगेऽस्मिन् मनसि निधातव्यम्।

ननु व्याख्यासन्दोहेऽस्मिँस्तर्हि व्यपगतदोषमर्थमवगन्तुमनुसन्धाता किं कुर्यात्? एके तां वेदान्तेन सम्बध्नन्ति, अपरे न्यायशास्त्रेण। अन्ये तामपरायत्तविद्यात्वेन प्रतिपिपादयिषन्ति। राजनयग्रन्थानाञ्चिकीर्षितन्तु अञ्जसा व्यावहारिकम्बभूव। अभ्युदयस्य निःश्रेयसः प्रत्यनीकत्वमपरिहार्यं खलु न भवति उभयोरैकात्म्यं सामञ्जस्यं वा शास्त्रेषु दरीदृश्यते।

वेदान्तविद्यायान्तु आन्वीक्षिकी श्रवणादनु अभ्यसनीयं मननमस्तीति गमयितुं शक्यते। आचार्यहक्करः सन्दर्भेऽस्मिन्नुपदेशसाहस्या गद्यप्रकरणं स्वप्रबन्धे निरदिक्षद् यत्र श्रवणमनननिदिध्यासनानामावश्यकत्वं कुहेतुसन्तमसो विमुक्तये आद्यशंकराचार्येण प्रत्यपादि। संशीतिभावापनोदनक्षमत्वं खलु मननस्य। श्रवणमनननिदिध्यासनानि संसृतेः सुखदुःखयोरविनाभावात् तत्त्वाधिजिगमिषूंस्त्रातुं प्रभवन्तीत्यत्र वैमत्यं नास्ति। आन्वीक्षिकी त्रय्या केन हेतुना सम्बन्धितेति विविधग्रन्थानां मतमाकलय्य आचार्यहक्करः समाधत्ते, दर्शनतर्कयोर्यौगपद्यप्रसङ्गात्।

त्रैविद्येभ्यस्त्रयीं विद्यां दण्डनीतिं च शाश्वतीम्।
आन्वीक्षिकीं चात्मविद्भ्यो वार्त्तारम्भांश्च लोकतः॥

ननु सत्यपि दर्शनतर्कशास्त्रयोरविनाभावे आन्वीक्षिकीमधिकृत्य दर्शनमिति विवक्षणं शास्त्रवचनेनं संगच्छते। प्राच्यप्रतीच्यविद्वद्भिर्विहितो दर्शनमिति रूपान्तरमाचार्यहक्करस्य मते निर्युक्तिकमवसेयम्।

हेतुभिरन्वीक्षमाणा विद्येयं मननमासीदस्यत्र निगमनमभ्यूहन्श्च पञ्चविंशतितत्त्वानामवगमस्या-

पवर्गगम्यतां प्रकृतेर्नानाऽऽश्रयतां ख्यापयत्सांख्यदर्शनमभ्यूहनजीवितमासीत् । सांख्याश्रितो योगोऽपि कियताप्यंशेन । देवं निवृत्तिश्च निराकरिष्णु लौकायतिकदर्शनमप्येवमेव निगमनाभ्यूहने अशिश्रियत् । परवर्त्तिनो वेदान्तिनः प्रतिपन्नसांख्यसिद्धान्तान् तार्किकानित्यजिज्ञपन्निति विदितमेव वेदान्तशास्त्रविचक्षणानाम् । आचार्यहवकरस्य मतेऽर्थशास्त्रप्रणेतुर्व्याहृतेरवबोधार्थं संज्ञानमिदमर्थंवदस्ति । सांख्यं योगो लोकायतञ्चेत्यान्वीक्षिकीति । विद्यासु एतासु मननं, तर्कोऽभ्यूहनं निगमनञ्च शीर्षस्थानीयान्यासन्, तासां परिस्फुटचिन्तनत्वात्ता मननार्थिकां संज्ञामाहृतवत्यः इमास्तिस्रः किल दर्शनशास्त्रीयपरिभाषामन्तर्भवन्ति, किन्तु आन्वीक्षिकी दर्शनमस्तीति निगदितुं न शक्यते । मनननिगमने इति संज्ञे अप्येतदर्थमविचारसहे । सन्दर्भेऽस्मिन्नाचार्यहवकरः कौटिल्यस्यान्वीक्षिकीसमाश्रितं ग्रन्थं निर्दिशति, यो राज्यदर्शनमिति संज्ञामवाप्तुं नो प्रभवति ।

आन्वीक्षिकीमधिकृत्य बहुविधग्रन्थेषु पंक्तयो वीक्ष्यन्ते । सामस्त्यविवेचनायोगादपि समासेनैव विहितं विवेचनमिदमनुवादकानामसौकर्यं लघयिष्यति । स्वसमीक्षोपसंहृतेः प्रागाचार्यहवकरो राजशेखरस्य काव्यमीमांसाया उपोद्घातं प्रति अनुसन्धित्सूनां ध्यानमाक्रष्टुं समीहते । कविरहस्ये द्वितीयेऽध्यायेऽसौ चत्वारि शास्त्राणि निरदिक्षत्– पौरुषेयन्तु पुराणमान्वीक्षिकी मीमांसा स्मृतितन्त्रमिति । आन्वीक्षिकी त्रयी वार्त्ता दण्डनीतिश्चेति विद्या इत्यत्र कौटिल्यमुदाहरन् राजशेखर आन्वीक्षिक्या हि विवेचिता त्रयी वार्त्तादण्डनीत्योः प्रभवतीति व्यवारीत् । अत ऊर्ध्वमान्वीक्षिकीमसौ द्विधा व्यभाङ्क्षीत् पूर्वोत्तरपक्षाभ्याम् । अर्हद्भदन्तदर्शने लौकायतिकमतञ्च पूर्वपक्षे संस्थाप्य सांख्यं न्यायं वैशेषिकञ्चोत्तरपक्षे समतिष्ठपत् । त इमे षट् तर्का इति निगद्य राजशेखर आन्वीक्षिकीविषयिकां संशीतिमपनुदति । वाल्मीकीयरामायणेऽपि लौकायतिकान् ब्राह्मणानधिकृत्य प्रयुक्तमान्वीक्षिकीति पदमप्यनादरं नार्हति ।

धर्मशास्त्रेषु मुख्येषु विद्यमानेषु दुर्बुधाः ।
बुद्धिमान्वीक्षिकीं प्राप्य निरर्थं प्रवदन्ति ते ॥ इति शम्

---

# कूरेश-पञ्चस्तवी

श्रीके० वी० रामकृष्णमाचार्यः *

पीताम्बरं वरदशीतलदृष्टिपातमाजानुलम्बिभुजमायतकर्णपाशम् ।
श्रीमन्महावनगिरीन्द्रनिवासदीक्षं लक्ष्मीधरं किमपि वस्तु ममाविरस्तु ॥

( सुन्दरबाहुस्तवे–१४ )

वैष्णवोत्तमाः श्रीवत्साङ्कमिश्राः श्रीमद्रामानुजान्तरङ्गिकशिष्येष्वग्रगण्याः । एते कलिवर्षे ४१०९ सौम्यनाम्नि संवत्सरे पुष्यमासे हस्तनक्षत्रे श्रीरामांशया श्रीमदनन्तभट्टारकाणां पुत्राः अभूवन् । काञ्चीनगरपरिसरवर्ती 'कूर' ग्रामः एतेषां जन्मभूमिः । एतेषां तद्ग्रामाधिपत्येन 'कूरेशाः' इति व्यवहारस्समजनि । एवं परमभागवतोत्तमानां "आव्वार्" इति कीर्त्यमानानां यद् शमदमादिगुणविभवैश्वर्यं, तादृशशमदमादिसम्पद्युक्ताः एते "कूरत्ताव्वार्" इत्यपि कीर्त्यन्ते । श्रीमद्रामानुजगुरुचरणारविन्दावेवानन्यशरणतयाऽऽश्रित्य, गुरुसेवायां प्राणानपि त्यक्तुमुद्युक्ताः महान्त एते । श्रीमद्रामानुजा अपि कूरेशरूपशिष्यलाभेन आत्मनो मुक्तिं करतलामलकं मन्यन्ते स्म । तादृशानां कूरेशानां गुणवैभवं वर्णयितुं को वा समर्थः ? व्याससूत्राणां वृत्तिं बोधायनप्रणीतां आमूलाग्रमेकवारमेव दृष्ट्वा, तां सर्वामपि कण्ठस्थीकृतवन्तः गुरूणां कृते तां समर्पितवन्तश्चासन् । एतादृशकार्येण प्रीता गुरवः श्रीभाष्यकारा एतान् यामुनाचार्यावताररूपेण प्रस्तुतवन्तोऽपि । न केवलमेतत् । गुरुभिः श्रीभाष्यादिग्रन्थेषु प्रोच्यमानेषु, तदवगतिपूर्वकं तान् सर्वानपि ग्रन्थान् सपदि निर्दुष्टं लिखितवन्त एते । एतेषां पतिव्रता साध्वी "आण्डाल्" नाम्नी द्वितीया संवृत्ता । एते च स्वग्रामे प्रातरारभ्य रात्रौ यामद्वयपर्यन्तं निरतमन्नदानमकुर्वन् । एकदा श्रीरङ्गनाथ एतेषां स्वप्ने आविर्भूय श्रीरंगमागन्तुमाज्ञापयामास । तदनु सर्वस्वं त्यक्त्वा सद्वितीया एते श्रीरंगं गत्वा उञ्छवृत्त्या जीवनं यापयन्तः श्रीरंगनाथं संसेव्य, श्रीरंगनाथप्रसादात् ज्ञानिनौ द्वौ पुत्रौ अलभन्त । यदा क्रिमिकण्ठनामा राजा भगवद्रामानुजान् मतद्वेषेण अपकर्तुमैच्छत् तदा तान् रक्षितुं गुरोर्नाम्ना स्वयं गत्वा, राजदौष्ट्येन काणा अभवन् । श्रीरंगे रामानुजशिष्यप्रवेशो निषिद्ध इति राजशासनमाकर्ण्य, रंगनाथमपि त्यजेयं, गुरूंस्तु नैव त्यजेयमिति, श्रीरंगं त्यक्त्वा सुन्दरभुजस्वामिनां सिसेविषया वनगिरिमगच्छन् । मार्गमध्ये शीघ्रतया स्वगुरुसमागमं कामयमाना एते, नेत्रबाधाविस्मृत्यै च भगवत्कल्याणगुणान् ध्यायन्तः पञ्चस्तवीमरचयन् ।

---

* व्याख्याता, के० सं० विद्यापीठम्, तिरुपति ( आन्ध्र )

एते "शान्तो दान्त उपरतस्तितिक्षुस्समाहितो भूत्वा आत्मन्येवात्मानं पश्येत्" (बृ०आ०उ) इति वचनमनुसृत्य शमदमादिसाधनसंपद्युताः "नायमात्मा प्रवचनेन लभ्यः, यमेवैष वृणुते तेन लभ्यः" ( मुण्डको० ) "भक्त्या ह्यनन्यया शक्यः अहमेवंविधोऽर्जुन" ( भगवद्गीता ) इत्यादि श्रुतिस्मृतिवाक्यानि परिशील्य, भक्तिमार्गं परिगृह्य, 'विवेक-[1] विमोका[2]-भ्यास[3]-क्रिया[4]-कल्याणा[5]-नवसादा[6]-नुद्धर्ष[7] युक्ता ध्यानेन परमपुरुषं श्रीमन्नारायणम्, आश्रितवत्सलां श्रीदेवीं ज्ञाननेत्राभ्यां साक्षात्कृत्य, तान् स्तुन्वाना अभीष्टं गुरुसमागमं, नेत्रे चालभन्त ।

अस्यां पत्रस्तव्यां श्रीभाष्यारूढो वैष्णवसिद्धान्तसारः सम्यक् वर्णितः । अस्यां च कविता मृदुमधुरा सर्वाङ्गसुन्दरी च सती भक्तिरसमाप्लावयन्ती भावुकान् तन्मयान् करोति । अस्यां सूक्तीनां नेयत्ता । उपनिषदोऽप्यत्र श्राव्यश्लोकरूपतामापन्नाः ।

एतैः कूरेशैः श्रीस्तवः, वैकुण्ठस्तवः, अतिमानुषस्तवः, सुन्दरबाहुस्तवः, वरदराजस्तवः इति पञ्च स्तोत्राणि रचितानि ।

## श्रीस्तवः

स्वगुरुभिः श्रीमद्रामानुजमुनिभिः शरणागतिगद्यारम्भे स्तुतां श्रीमन्नारायणाभिमतानुरूपासंख्येयकल्याणगुणविशिष्टामखिलजगज्जननीं देवदेवदिव्यमहिषीमशरण्यशरण्यां पुरुषकारायादौ एकादशश्लोकेषु अस्तुवन् । अस्मिन् देव्याः कल्याणगुणान् स्तोतुं बृहस्पतिरपि नालं किमुताहमिति स्वनैच्यमनुसन्धायापि तत्र स्वप्रवृत्तिमित्थमेते समर्थितवन्तः ।

ये वाचां मनसां च दुग्रहतया ख्याता गुणास्तावकाः
तानेव प्रति साम्बुजिह्वमुदिता है मामिका भारती ।
हास्यं तत्तु न मन्महे नहि चकोर्यैकाखिलां चन्द्रिकां
नालम्पातुमिति प्रगृह्य रसनामासीत सत्यां तृषि ॥ ( श्रीस्तवः ४ )

पश्यत श्लोकस्थं भावसौन्दर्यम् । यथा किञ्चिद्भक्ष्यं दृष्ट्वा जिह्वा साम्बु भवति तथा श्रीदेव्याः गुणवर्णनेऽपि जिह्वा तेषां साम्बु आसीत् । सर्वगुणवर्णनं केनापि कर्तुं न शक्यमिति, गुणगानमेव न कार्यमिति को वा जनश्चिन्तयति ? तत्रापि यदौपम्यं चकोर्या दत्तं तदत्यन्तहृद्यम् । तेनात्र गुणलवसंकीर्तनमेवातन्यते इति व्यंग्यम् । एवं स्वप्रवृत्तिं समर्थ्य, श्रीदेव्या इंगितं ज्ञात्वा कथं नारा-

---

१. अदुष्टादन्नात् शरीरशुद्धिर्विवेकः । २. कामनाभावः विमोकः ।
३. नारायणगुणभावनं सदा ह्यभ्यासः । ४. यथाशक्तिपञ्चमहायज्ञाद्यनुष्ठानं क्रिया ।
५. सत्यं, आर्जवं, दया, दानं, अहिंसा इत्यादि कल्याणानि ।
६. देशकालवैपरीत्येभ्यः शोकवस्त्वाद्यनुस्मृतेश्च दैन्याभावः अनवसादः ।
७. अतिसन्तोषाभावोऽनुद्धर्षः ।

यणश्चेष्टते,[१] नारायणोऽपि तस्याः कटाक्षपाताय कथं चकोरायते[२] इत्यादि संवर्ण्य, सौन्दर्यादिगुणा अपि तत्सेवालभ्या[३] इति, सृष्टौ जडचेतनभेदकारणीभूता भारती तस्याः परिचारिकेति,[४] महेशत्वादिकमपि तत्कटाक्षपातलभ्यमिति[५] च संस्तुत्य तादृशकटाक्षपातायात्मनि तां प्रार्थयामासुः ।

## वैकुण्ठस्तवः

अस्मिन् आदितः ५८ श्लोकेषु उपनिषत्प्रतिपाद्यं परतत्त्वं स्वसिद्धान्तानुसारं सम्यग्वर्णितम् । ततः भगवतः क्षमाश्रितवत्सलत्वादिगुणा वर्णिताः । ततः

भ्रूविभ्रमेण मृदुशीतविलोकितेन मन्दस्मितेन मधुराक्षरया च वाचा ।
प्रेमप्रकर्षपिशुनेन विकासिना च संभावयिष्यसि कदा मुखपङ्कजेन ॥ (वैकुण्ठस्तवः-७०)

इति भगवत्संभावनं काङ्क्षमाणाः,

हा ! हन्त ! हन्त ! हतकोऽस्मि खलोऽस्मि धिङ्मां मुह्यन्नहो ! अहमिदं किमुवाच वाचा ।
त्वामङ्ग ! मंगलगुणास्पदमस्तहेयमास्मर्तुमेव कथमर्हति मादृगंहः ॥
( वैकुण्ठस्तवः-८५ ) इति नारायणस्मरणयोग्यतापि नास्तीति सन्दिहानाः,

जानेऽथवा किमहमङ्ग ! यदेव संगादंगीकरोषि यदि मंगलमन्यदस्मात् ।
तेन त्वमेनमुररीकुरुषे जनं चेन्नैवामुतो भवति युक्ततरो हि कश्चित् ॥
( वैकुण्ठस्तवः-८७ ) इति

भगवद्दयापात्रस्य भक्तस्य दोषा अपि गुणा एवेति "दोषो यद्यपि तस्य स्यात्सतामेतदगर्हित" मिति रामायणोक्तमर्थमनुसन्दधानाः समाहितचित्ता अभूवन् । ततः बहुभिः श्लोकैः स्वनैच्यमनुसन्धाय भक्तभगवतोश्शेषशेषिभावसम्बन्धं सम्यक्प्रकटीचक्रुः ।

अस्मिन् स्तवे तत्त्वप्रतिपादकश्लोकेषु मुख्योऽयं श्लोकः—

यः खल्वणोरणुतरो महतो महीयान् आत्मा जनस्य जनको जगतश्च योऽभूत् ।
वेदात्मकप्रणवकारण वर्णवाच्यं तं त्वां वयन्तु परमेश्वरमानुनामः ॥
( वैकुण्ठस्तवः—२० )

हे सर्वेश्वर ! परतत्त्वभूतो नारायणस्त्वमेव । वेदस्वरूपोङ्कारवाच्यपरमेश्वरोऽपि त्वमेव । "य आत्मनि तिष्ठन् आत्मानमन्तरो यमयति यमात्मा न वेद एष सर्वभूतान्तरात्मा अपहतपाप्मा दिव्यो देव एको नारायणः" ( सुबालोपनिषद् ) इतिस्तुतस्सर्वान्तर्यामिस्त्वम् । "अणोरणीयान् महतो महीयान्" (महानारायणोपनिषद्) इति सर्वविलक्षणस्त्वं, "पतिं विश्वस्यात्मेश्वरं शिवमच्युतं

---

१. श्रीस्तवे १-श्लोकः । २. श्रीस्तवे ४-श्लोकः । ३. श्रीस्तवे-७ श्लोकः । ४. श्रीस्तवे ९ श्लोकः । ५. श्रीस्तवे १० श्लोकः ।

नारायणं महाज्ञेयं विश्वात्मानं परायणम्'' ( महानारायणोपनिषद् ) इत्युक्तस्सर्वेश्वर एव ।

एवं श्रीमन्नारायणस्यावाङ्मानसगोचरानन्दस्वरूपं,[१] नारायणसङ्कल्पेनैव ब्रह्मादीनामुत्पत्तिं,[२] सात्विकश्रुतिस्मृतिपुराणेषु नारायणस्यैव परतत्वरूपेण संकीर्तनं,[३] च प्रकटय्य, भगवत्कल्याणगुणकीर्तनपुरस्सरं ब्रह्मादिदेवानां, सनकादिसिद्धानां च दुर्लभं सायुज्यमेव परमपदमिति,[४] तच्च नित्यमुक्तनिरन्तरानुभाव्यमिति चोक्त्वा, भगवत्साम्यादपि भगवत्परिचरणमेव महदिति'' मुक्तिं ततो हि परमां तव साम्यमाहुः त्वद्दास्यमेव विदुषां परमं मतं तत्'' ( वैकुण्ठस्तवे–६६ श्लोकः ) इति प्राबोधयन् । अस्मिन् स्तवे १०२ श्लोकाः सन्ति ।

## अतिमानुषस्तवः

श्रीमन्नारायणावतारेषु परिपूर्णावताररूपेण अर्चावताररूपेण च प्रसिद्धेषु रामकृष्णाद्यवतारेषु अतिमानुषलीला भगवतः संवर्ण्यास्मिन् भगवतो नारायणस्य सर्वविलक्षणत्वं प्रकाशयामासुः ।

भगवतो लीलावताराणां का आवश्यकता ? स च सङ्कल्पसिद्धः सङ्कल्पमात्रेणैव दुष्टान् शिक्षयितुं प्रभवति । तस्मान्न दुष्टशिक्षणं प्रयोजनम् । किन्तु तत्र कारणमाश्रितवात्सल्यमेव । आश्रितानां भक्तानां स्वीयमतीन्द्रियं दर्शनं यथा सिद्धयति, यथा ते मुक्ता भवेयुः तथा तानाश्रितान् संभावयितुमेव भगवता लीलावताराः[५] स्वीकृताः । यद्यपि मानुषीं तनुमाश्रित्य भगवान् स्वभक्तमध्येऽतिष्ठत् अथापि स्वीयमतिमानुषत्वं स तत्र प्रदर्शितवानेवेति तत्तदवतारेषु उदाहरणप्रदर्शनपूर्वकमेतेऽस्मिन् स्तवे प्राकटयन् । कानि तान्यतिमानुषानीति चेत्—उच्यन्ते । वटपत्रशायिनः बालस्योदरे ब्रह्माण्डानामुपसंहारः;[६] ब्रह्मादीनामपि स्रष्टुः ब्रह्मादिभिस्स्तुष्टिः;[७] सङ्कल्पमात्रेण सर्वमपि स्वाधीनं कर्तुं समर्थस्य वटुरूपेण याचनं;[८] सीतान्वेषणे सीताया स्थितिमजानतो रामस्य जटायोर्मोक्षदानं;[९] एकेनैव बाणेन सप्तसालानपि च सप्तगिरीन् रसातलञ्च भेत्तुं समर्थस्य रामस्य सुग्रीवमैत्री;[१०] समुद्रमनुलङ्घ्यैव रावणमहत्वैव विभीषणस्य लङ्काराज्यदानम्;[११] इत्यादि । एतादृशातिमानुषशक्तिसंपन्नत्वादेव रामस्य, हनूमान् मोक्षमपि त्यक्त्वा तत्परिचरणाय तन्नामसङ्कीर्तनाय[१२] चात्मानं समर्पितवानिति भक्ताग्रगण्यो हनूमानेव सर्वेषामपि भक्तानां मार्गदर्शक इति सश्रद्धं समुदघाटयन् ।

एवं कृष्णावतारे पूतनाशकटार्जुनादिभञ्जनमनुसन्धाय एतादृशस्त्वं कंसाद्भीतः नन्दगोपकुले आत्मानमगौप्सीः इति भगवन्तमपृच्छन्[१३] । एवमस्मिन् स्तवे गोवर्धनोद्धरणादिलीला अपि सम्यक्

---

१. वैकुण्ठस्तवः—२५ श्लोकः । २. वैकुण्ठस्तवे—२१ श्लोकः । ३. वैकुण्ठस्तवे—१८ श्लोकः । ४. वैकुण्ठस्तवे–४३ श्लोकः । ५. अतिमा–१ श्लोकः । ६. अतिमा–१४ श्लोकः । ७. अतिमा–१५ श्लोकः । ८. अतिमा–१६ श्लोकः । ९. अतिमा–१८ श्लोकः १०. अतिमा–१९ श्लोकः । ११. अतिमा–२४ श्लोकः । १२. अतिमा–३२ श्लोकः । १३. अतिमा–३४ श्लोकः ।

वर्णिताः। पश्यत नवनीतचौरं कृष्णं प्रति एते किं कथयन्तीति—

पश्यत्सु सूरिषु सदा परमं पदं ते देव्या श्रिया सह वसन् परया विभूत्या।
योगेन योगनिरतैः परिमृग्यमाणः किं त्वं व्रजेषु नवनीतमहो व्यमुष्णाः॥

( अतिमा०–३५ )

"तद्विष्णोः परमं पदं सदा पश्यन्ति सूरयः" इत्युपनिषद्वचनात् योगीश्वरेषु भवन्तमन्वेषयत्सु सत्सु भवता भवत्साक्षात्कारो व्रजवासिनां दत्तः। श्रियोऽप्यधिपतिस्सन् अपि नवनीतचौरोऽभूः। किमेतद्वैपरीत्यानुसन्धानं भवतः ?

एवं निजधाम्नि गव्यसमूहे सत्यपि परगृहान् प्रविश्य किमर्थमचूचुरः ? चोरिताच्छिष्टं गव्यशेषं कुतो भस्मसादकरोः ? किमर्थं गोपीजनानां परिहासपात्रमभूः ? नवनीतचौर्यं गोपयितुं कुतः नवनीतदिग्धं करकमलं गात्रे प्रमृष्टवानसि ? इत्येवं बहुधाप्रच्छन्।

एवं ते वेणुनादमहिमानमित्थमस्तुवन्—

वेणुक्वणप्रणयिनि त्वयि लोकनाथ ! वृन्दावनं चरणसंचरणैः पुनाने।
भावास्तदा वनभुवः किल कीदृशास्ते त्वद्गीतसिक्तसिकतासु वसुन्धरासु॥

( अतिमा०—४५ )

हे नाथ ! चरणसंचारैः वृन्दावनं पवित्रीकुर्वता यदा वेणुनादः कृतः तदा तत्र स्थिता भावाः कीदृशास्संजाताः ? इति पृष्ट्वा तदेव पुनरित्थमभ्यष्टुवन्।

धन्यैः श्रुतं तदिह तावकरासकाले गीतेन येन हि शिलास्सलिला बभूवुः।
पञ्चापि किञ्च परिवृत्तगुणानि भूतान्युर्वीकृशानुमरुदम्बरशम्बराणि॥

( अतिमा–४६ )

पृथिव्यप्तेजोवाय्वाकाशरूपभूतसङ्घातः शिलोच्चयानपि द्रवीकुर्वंति वेणुगाने स्वभावं परित्यज्यान्यादृग्रूपमाप किल। एवं वेणुनादामृतं तत्र पुलिने विस्तृतं स्वरसनाभिः लीढवतां भुजगानामपेक्षया को वा श्रेष्ठो भवतीति भुजगानपि स्तुवता, श्रीकृष्णस्य स्वरूपम्

अम्भोदनीलमरविन्ददलायताक्षं पिच्छावतंसमुररीकृतवेणुपाणिम्।
त्वां गोपवेषपरिकर्मितकायकान्तिं धन्यास्तदा ददृशुरुन्मथितान्यभावाः॥ ( अतिमा - ४८ )

इति मनसि ध्यात्वा, "तदा वृन्दावने स्थितश्चिदचिदात्मकस्सर्वोऽपि प्रपञ्चः त्वत्पादरजस्सङ्गान्मुक्तोऽभूत्। किमस्मद्दौर्भाग्यम् ? वृन्दावने स्थिरचरात्मककीटदूर्वापर्यन्तजन्तुनिचये बत ये तदानीं नैवालभामहि जनिं" ( अतिमा—५० ) इति स्वपापित्वमनुसन्धाय

पापीयसोऽपि शरणागतिशब्दभाजो नोपेक्षणं मम तवोचितमीश्वरस्य।
त्वज्ज्ञानशक्तिकरुणासु सतीसु नेह पापं पराक्रमितुमिच्छति मामकीनम्॥ ( अतिमा—६१ )

इति मां मोपेक्षस्व ! भवच्छरणागतोऽहमिति पुनः पुनः संप्रार्थ्य स्तवमिदमुपसंहृतवन्तः । अस्मिन् भगवत्प्रियकृत्कर्मैव पुण्यमिति, तदतिरिक्तं पापमिति, गोपालत्वमेव कृष्णस्याद्भुतमिति च प्रकटय्य पुनः 'गोपालवेषपरिकर्मपरावरेशं, पिच्छलाञ्छनसुदामकृतोपवीतं गोधूलिधूसरितकुन्तलं तमसः परस्तात (यत्) परमं धाम" (अतिमा —५५) अकीर्तयन् । अस्मिन् ६१ श्लोका हृद्याः सन्ति ।

## सुन्दरबाहुस्तवः

अस्मिन् तदा तैः समाश्रितोऽर्चावतारः श्रीमन्नारायणस्सुन्दरबाहुस्वामो स्तुतः । अत्रादौ गिरिवर्णनं, ततः सुन्दरबाहुस्वामिनोऽङ्गाङ्गवर्णनं च कृतम् । श्रीमन्नारायणाधिष्ठितोऽयं गिरि-वैकुण्ठतुल्यश्चकास्ति इति, तत्स्थाः सर्वेऽपि जन्तवो नित्यमुक्ततुल्यास्सन्तो रागद्वेषादिगन्धरहिता महोपनिषदुक्तप्रकारेण "एको ह वै नारायण आसीत्, न ब्रह्मा नेशान" इति नारायणमेव परतत्त्व-तया ज्ञात्वा "नेह नानास्ति किंचन" इति श्रुत्या इतरनिवृत्तौ सत्यां नारायणमेवाराधयन्तीति सम्यग्वर्णितम् । अत्र मर्कटचरितमित्थं वर्णितम्—

यदीयशिखरागतां शशिकलां तु शाखामृगाः निरीक्ष्य हरशेखरीभवनमामृशन्तस्तत. ।
स्पृशन्ति न हि देवतान्तरसमाश्रितेति स्फुटं स एव सुमहातरुव्रजगिरिगृहं श्रीपतेः ॥

(सुन्दरबाहु-७)

अन्येषु परतत्त्वबुध्या ये चरन्ति तेषां दर्शनस्पर्शनादिकमप्ययुक्तमिति, हस्तग्राह्यमपीन्दु-मस्पृष्ट्वा प्रतिपादयन्ति स्म । एवं गिरिवर्णनम्, अर्चारूपस्य स्वामिनोऽङ्गाङ्गवर्णनं च विधाय, श्रीरङ्ग-धाम्नि गुरुणा सहावस्थितिमात्मनस्संप्रार्थ्य गुरुदर्शनभाग्यमापुः । अस्मिन् १३२ श्लोकाः सन्ति ।

## वरदराजस्तवः[1]

गुरुसमागमानन्तरं गुरूणामादेशेन कश्चिवरदराजस्य स्तोत्रं कृत्वा नेत्रे पुनरवापुरेते । पञ्चस्तवेषु वरदराजस्तवस्यास्त्यन्यदपि वैशिष्ट्यम् । अयं स्तवः श्रीमन्नारायणशरणागतिप्रबोधक-मन्त्ररत्नस्वरूपः । अस्मिन् 'श्रीनिधिं निधिमपारमर्थिनाम्" इति द्वितीयश्लोकेन मन्त्ररत्नस्थं श्रीमत्पदं व्याख्याय, नारायणपदैकदेशनारपदार्थतया स्वामिनः निवासभूतं करिगिरिं सम्यगुपवर्ण्य, नारायण-शब्दवाच्यस्य निखिलहेयप्रत्यनीककल्याणगुणविशिष्टस्य श्रीमन्नारायणस्य कल्याणगुणान् संवर्ण्य, दिव्यमङ्गलविग्रहस्यापि नारायणशब्दवाच्यत्वात्, श्रीचरणेषु शरणागतेर्वक्तव्यत्वाच्च शिर आरभ्य पादपर्यन्तमङ्गाङ्गवर्णनं विधाय, रामकृष्णनृसिंहाद्यर्चावतारेषु श्रीमन्नारायणस्य सौशील्यकृपावात्स-ल्यादिगुणान् अभिवर्ण्य, शरणागतिं प्रतिपादयितुकामाः श्रीरामं विभीषण इव समस्तदोषनिलयोऽहं त्वामेव शरणं प्रपद्ये इति पुनः पुनः "वरद ! शरणमित्यहं त्वां वृणे" (८२ श्लोकः) वरदमुरुदयं

१. स्तवेऽस्मिन् १०२ श्लोकाः सन्ति ।

गतिं त्वां वृणे" ( ८३ श्लोकः ) इति संप्रार्थ्य, भवत्करुणावताराया: देव्याः भक्तस्य पराङ्कुशमुनेः भक्तस्य नाथमुनेर्भक्तस्य यामुनमुनेः भक्तस्य श्रीमद्रामानुजमुनेः भक्तस्य मम ते दास्यमनुगृहाणेति बहुवारं देवं संप्रार्थितवन्तः । एतत् स्तोत्ररचनासमये कूरेशाः परिपक्वहृदयाः ब्रह्मादिपदमपि तृणीकर्तुं समर्था जाताः । पश्यत—

भोगा इमे विधिशिवादिपदं च किञ्च स्वात्मानुभूतिरिति या किल मुक्तिरुक्ता ।
सर्वं तदूषजलजोषमहं जुषेय हस्त्यद्रिनाथ ! तव दास्यमहारसज्ञः ॥

( वरदराज ८१ श्लोकः )

भोः स्वामिन् ! ते दास्यमहारसज्ञोऽहं ब्रह्मादिपदं स्वात्मानुभवरूपमोक्षं च ऊषरक्षेत्रगत-जलाभासरूपं मन्ये ।

एवमत्र पाञ्चरात्रागमप्रसिद्धं व्यूहोपासनमपि सम्यगस्मिन् श्लोके वर्णितम् ।

गुणैष्षड्भिस्त्वेतैः प्रथमतरमूर्तिस्तव बभौ
ततस्तिस्रस्तेषां त्रियुगयुगलैर्हि त्रिभिरभुः ।
व्यवस्था या चैषा ननु वरद ! साविष्कृतिवशात्
भवान् सर्वत्रैव त्वगणितमहामङ्गलगुणः ॥ ( वरदराज–१६ )

हे—वरद ! उपासकानां सौकर्याय ज्ञानबलैश्वर्यवीर्यशक्तितेजोरूपगुणविशिष्टस्त्वं वासुदेव इति, ज्ञानबलगुणविशिष्टस्त्वं सङ्कर्षण इति, ऐश्वर्यवीर्यसम्पन्नस्त्वं प्रद्युम्न इति, शक्तितेजोयुत-स्त्वमनिरुद्ध इति च कीर्त्यसे । अयं गुणसङ्कोचः केवलमुपासकानां सौलभ्यायैव । भवांस्तु असङ्ख्येयकल्याणगुणः खलु । न केवलमस्मिन्नेव स्तवे किन्तु स्तोत्रान्तरेष्वपि व्यूहोपासनविषयकाः श्लोकाः सन्त्येव ।

एवमनुकूलस्य सङ्कल्पः, प्रतिकूलवर्जनम्, रक्षयतीति विश्वासः गोप्तृत्ववरणम्, आत्मनिक्षेपः, कृपणत्वमित्येवं षड्विधासु प्रपत्तिषु गोप्तृत्ववरणमेव शरणागतिरिति "त्वां वृणे" इति पुनः पुनः वदन्तो व्यक्तीकृतवन्तः ।

तादृशं स्तोत्रसाहित्यं मुमुक्षुभिरेव न, किन्तु सर्वैरपि भक्तिमार्गानुयायिभिः सांसारिकैः संसारदुःखोपशमाय अवश्यं पठनीयमिति शम् ॥

———

# ग्रहस्थितेर्जीवने प्रभावः

□

विद्याभूषणः पं० श्रीगणेशरामशर्मा *

□

अयि वेदवेदाङ्गदर्शनसाहित्यादिविविधविद्यापारावारपारीणा ज्ञानविज्ञानसम्पन्नबुद्धयः सकलकलाकलापकुशलाः श्रद्धाविश्वासभाजः सम्माननीया विद्वांसो महाभागाः ! सततसामयिकसाहित्यानुशीलनप्रवणाः प्रियाः पाठकबन्धवो महानुभावाः ! जानन्त्येवात्रभवन्तो भवन्तो भद्रभव्यभावानुभूतिशीलाः प्रौढानुभवशालिनः सज्जना यदिह भौतिकविज्ञानार्थशास्त्रराजनीतिवाणिज्यव्यवसायप्रधाने परमाणूद्जनविस्फोटनाम्नामोघशक्तिसंदृप्ते विद्युदग्नितीव्रनमजवे युद्धाग्निविभीषिकासंत्रस्त्रे सर्वतः सर्वराष्ट्रप्रजाजनजीवनसङ्घर्षतरलेऽस्मिन् विकाशयुगे केचन दुराग्रहग्रस्ता उदरभरणमात्रपुरुषार्थवादिनो यन्त्रैकशरणचेतनाः परदेशीयाचारविचारधाराचाकचक्यचञ्चलचेतसः स्थूलबुद्धयो जडसभ्यताग्रहणग्रहिला जनाः प्राच्यं प्रतीच्यं वा ज्ञानं तत्त्वतः पूर्णतया साधिकारं न जानन्तोऽस्य विश्वब्रह्माण्डस्य सृष्टिस्थितिलयकारणे परमात्मनीश्वरे तत्प्रेरितपरोक्षशक्तीनां सत्तायां चाश्रद्दधाना भारतीयवेदवेदाङ्गदर्शनशास्त्रतत्त्वसिद्धान्तान् केवलं कपोलकल्पितानिव निस्सारान् सर्वांशतो मिथ्या प्रमाणयितुं दुश्चेष्टन्त इति विशेषतो वैदिकयज्ञानुष्ठानकर्मकाण्डविज्ञाने प्राचीनायुर्वेदचिकित्सापद्धतौ फलितज्यौतिषतन्त्रे तु नवशिक्षितानामेषां नांशतोऽपि श्रद्धाभावलवलेशो विद्यते ततस्ते ज्यौतिषशास्त्रस्य फलिततन्त्रोक्तग्रहप्रभावाणां सत्यत्वेऽतिशयसंशयाः परप्रत्ययनेयबुद्धयः सन्देहोद्भ्रान्तमस्तिष्काः फलादेशसिद्धान्तमकर्मण्यानां दैववादं रूढिवादं च जोघुष्यमाणाः सदा दैवज्ञानाक्षिपन्ति। केचित्पुनरास्तिक्यभावापन्नाः स्वयं भारतीया भगवति परमेश्वरे तत्प्रयोजितदैवीशक्तीनां सत्तायां बहु विश्वसन्तोऽपि च वर्तमानविश्वस्य नानाराष्ट्राणां नव्यवैज्ञानिकैः सप्रमाणं सप्रयोगं प्रत्यक्षं च प्रतिष्ठापितस्य विज्ञानविकाशक्रमस्य तत्त्वावबोधाय यावदपेक्षितं बौद्धिकं स्तरमस्पृशन्तः सङ्कीर्णहृदयत्वाच्छ्रद्धाजडतां रूढिवादप्रियतां कूपमण्डूकत्वञ्च द्रढयन्तः स्वदेशीयानाम् तत्तच्छास्त्राणामधीतिबोधाचरणप्रचारणैः प्राप्यं पारमार्थिकं ज्ञानं सोपपत्तिकमनासाद्य जीविकावृत्तिनिर्वाहमात्रपर्याप्तं ज्यौतिषायुर्वेदादिविधानां केवलं पल्लवग्राहिपाण्डित्यं समाश्रयन्तोऽन्धेन नीयमाना अन्धा इव प्रजासु बुद्धिभेदं जनयन्तो भ्रमोत्पादनं कुर्वन्ति। परिणामतोऽस्माकं भारतीयं ज्योतिर्विज्ञानं प्रखरं भास्वरं प्रत्यक्षं सदपि कैश्चित्स्वार्थपरायणैर्नक्षत्रसूचिभिर्याचकैर्मौहूर्तिकैश्चापकर्षितां

---

* डूँगरपुरम् ( राजस्थानम् )।

नीतं किंचित्कलुषितं मलिनीकृतमिव च दृश्यते। प्राचीना नवीना वानभिज्ञास्तत्तद्विद्यानां साङ्गोपाङ्गं तलस्पर्शि पारमार्थिकं निगूढं ज्ञानमनाश्रयन्तो गम्भीरतत्त्वावबोधे मोमुह्यन्ते चेत्तदतीव स्वाभाविकम्। परदेशीयाः प्रजाः कामं किमपि वदन्तु भारतीयानां विद्यानां विषये परन्तु महद्दुःखं तु तदा जायते मार्मिकाणां यदास्माकं राष्ट्रनेतारः प्रामाणिकाः पुरुषाः शिक्षिता विज्ञा वैज्ञानिकाः स्वात्मानं शिक्षितं सभ्यंमन्या अपि स्वदेशस्य कला विद्या ज्ञानं विज्ञानं प्रति तत्तद्विद्याविशेषज्ञान् प्रति विदुषश्चानास्थामश्रद्धां जुगुप्सां तिरस्कारभावनां च प्रथन्ते। एवं सति फलिततत्त्वसिद्धान्तनिरूपणमद्यत्वे कियत्कठिनं कष्टसाध्यं वारण्यरोदनमिव मोघं भवतीति सरलतयाऽनायासं चानुमातुं शक्येत विचक्षणैः पाठकैः। साध्वाह श्रीमान् भास्कराचार्यवर्यः सिद्धान्तशिरोमणेर्गोलाध्याये—

ज्योतिःशास्त्रफलं पुराणगणकैरादेश इत्युच्यते
नूनं लग्नबलाश्रितः पुनरयं तत्स्पष्टखेटाश्रयम्।
ते गोलाश्रयिणोऽन्तरेण गणितं गोलोऽपि न ज्ञायते
तस्माद्यो गणितं न वेत्ति स कथं गोलादिकं ज्ञास्यति ?

सत्यप्येवमत्राद्य भारतीयज्योतिर्विज्ञानदशा फलितसिद्धान्तमधिकृत्य सर्वेषामपि जडचेतनानां जीवने खगोलस्थानां ग्रहाणां प्रभावः पतति न वा ? यदि च पतति तदा सः कथं बोधगम्यः स्यात् ? ग्रहाणां प्रभावः पतितोऽपि स खलु निवार्यो वाऽ निवार्यो वा भवितुमर्हति न वेति विषयेष्वेषु कश्चिद्विमर्शो बुधानां सर्वसाधारणानां च पुरः समुपस्थाप्यते प्रसङ्गात्। ज्ञानस्यानन्तत्वान्मानवबुद्धेरल्पत्वात्तत्तद्विषयेष्वल्पज्ञत्वाच्चात्र विषये प्रमेयोपपादने गच्छतो मे प्रमादात्स्खलनानि बुधाः क्षाम्यन्त्विति विनिवेद्य प्रकृतमनुसरामि—

एतत्तु नास्तिका आस्तिकाः पण्डित मूर्खा ज्ञानिनो विज्ञानविदः सर्वेऽपि स्वजीवने प्रतिदिनं प्रत्यक्षमेवानुभवन्ति स्वप्रतीतेः प्रामाण्यात् स्वीकुर्वन्ति च यदाकाशे संचरतां केषाञ्चिज्ज्योतिष्पिण्डानां स्थूलो वा सूक्ष्मो वा महीयान्वाल्पीयान् वा प्रभावो विश्वस्य सर्वेष्वपि च भूभागेषु दिग्दिगन्तेषु सर्वेषु सचेतनेषु जीवेषु पदार्थेष्वपि च सदा सर्वदा सर्वतः सर्वत्र न्यूनाधिकं निश्चयेन पततीति। तत्रापि केषांचिद् ग्रहनक्षत्रतारकाणाम् प्रभावस्तथा परिपतन् दरीदृश्यते यश्चर्मचक्षुर्भ्यामिवानुभवितुं शक्यते। उदाहरणार्थं तावत् सूर्यस्यैव प्रभावं वयमत्र किञ्चिच्चिन्तयेम चेत्तदा स्थितिः सुस्पष्टा जायेत। तथाहि—

प्रातर्यदा सूर्यः पूर्वाकाशक्षितिजे समुदेति तदा तस्य किरणजालं भूमावन्तरिक्षे सर्वासु दिक्षु च प्रसरति। तस्यालोकः सर्वं वै ब्रह्माण्डं व्याप्नोति। तस्यातप ऊष्मा च सर्वत्रानुभूयते। मानवाः पशवः खगाः सरीसृपाः कीटाः पतंगादयश्च सर्वेऽपि जीवाः सूर्योदयात् स्वजीवने कामपि नवीनामेव संजीवनीशक्तिं कर्मक्षमतां स्फूर्तिं चासाद्य सद्यश्चेतनां बलमोजः क्रियाशक्तिं कर्मक्षमतां वात्मनि विन्दन्तः

सोत्साहं कर्मसु प्रवर्तन्ते । न केवलं सचेतना एवापि तु जडपदार्थाश्चापि सूर्यप्रकाशेन प्रभाविता इव परिलक्ष्यन्ते । सूर्यरश्मिभिः स्पृष्टा जलाशयास्तरंगिता भवन्ति । वृक्षा लता गुल्माः पत्राणि पुष्पाणि मञ्जर्यः फलानि च कामपि नव्यां शोभां दधते । समस्तायाः पृथिव्याः सौन्दर्यं सूर्यकिरणानुप्राणितमुच्छ्वसतीव राजते । निखिलमपि स्थावरजंगमम् जगत् सत्यं प्रियमानन्दमयमिवाभाति । प्रातः सूर्योदयसमयेऽस्वस्था रुग्णाः पीडिता अपि प्राणिनः किञ्चिदाश्वस्ता इव स्वास्थ्यं सुखं शान्तिं चात्मनि सम्भावयन्ति । को नु खल्वेवंविधो भवेत्सचेतनो यो हि सूर्यस्य प्रकाशोष्मणोः प्रभावं प्रत्यक्षमेव परिपतन्तं न स्वीकुर्वाणः स्यात् ? सूर्योदयादेवास्य विश्वस्य प्रवृत्तिचक्रं गतिशीलं भवति तदस्तमनेन च शैथिल्यं निवृत्तिं वाश्रयते । सूर्योदयादेव सापेक्षिकस्य कलनात्मकस्य कालस्य गणनारम्भो भवति येन प्राणा विकलाः कलाः पलानि घटिकाः प्रहरा दिवसा रात्रयः सप्ताहाः पक्षौ मासा ऋतवोऽयनानि वर्षाणि युगादीनि सर्वाणि जायन्ते । सूर्यस्य प्रकाशतापोष्मभिरेव मेघोत्पत्तिर्जलवर्षणमृतुपरिवर्तनं कृषिकर्मसु धान्यांकुरप्ररोहा वृक्षादीनां विकाशो जलवायुशुद्धिः श्वेतपीतहरितकृष्णकर्बुरादीनां वर्णानां पृथक् पृथक् प्रतीतिर्दूषितबाष्पपरमाणूनां शोष इत्याद्याः परिमाणा भवन्ति । संक्षेपादिदमेव निवेदनं पर्याप्तं यदणुपरमाणुपर्यन्तं सर्वमपि जगत् सूर्यसाक्षिकं स्पन्दते स्वस्थितिं च परिपालयति । एवं सति सूर्यस्य तमिमं प्रत्यक्षं प्रभावं को नाम न मन्येत ? तत एव हि प्राचीना मन्त्रद्रष्टारो महर्षयो नवीना वैज्ञानिकाश्च रविरश्मिषु जीवनदायकममृतमयं किमप्यविनाशि तत्त्वं निहितं समर्थयन्ते । नवीना वैज्ञानिकास्तु स्वप्रयोगशालासु बहुयन्त्रोपकरणानां साहाय्येन लोकजीवनोपयोगिनां सूर्यकिरणान्तःस्थितानां तत्त्वानां ( Cosmic Rays, ultra violet Rays, e. t. c. ) अस्तित्वं सप्रमाणं प्रयोगसिद्धं चामनन्ति । सूर्योष्मणाग्नीन्धनविद्युच्छक्तिप्रयोगैर्यन्त्रसञ्चालनं कर्तुं प्रयतन्ते वैज्ञानिकाः । नव्या वैज्ञानिकास्तु चन्द्रलोकयात्रामपि भौममण्डलयात्रां च कर्तुं कामयन्ते । इत्थं सुदूरमूहापोहानन्तरं त्वज्ञा जडा मन्दमतयो मूर्खाश्चापि सूर्यस्यातपोष्मप्रकाशानां प्रभावं स्वीकुर्युरेव किन्तु नव्यशिक्षितानां पुरः 'सूर्य आत्मा जगतस्तस्थुषश्च', 'आकृष्णेन रजसा वर्तमानो निवेशयन्नमृतं मर्त्यं च हिरण्ययेन सविता रथेन देवो याति भुवनानि पश्यन् ॥ १ ॥ 'नवो नवो भवति जायमानोऽह्नां केतु रुचसामेत्यग्रं भागम् विदधात्ययनं प्रचन्द्रमाः स्थिरं ते दीर्घमायुः' ॥ २ ॥ 'योऽसावादित्ये पुरुषः सोऽसावहम् ।' इत्यादीनि श्रुतिवचनानि गम्भीरज्ञानविज्ञानानुभवशबलानि समुच्चारयन् कोऽपि भारतीयः शास्त्रज्ञो विद्वान् वेदशास्त्रप्रामाण्यात् सूर्यस्य चान्येषां ग्रहाणां च प्रभावसम्बन्धिनं सत्यसिद्धान्तं त्रिकालाबाधितं किलाव्यभिचारि प्रमाणयति तदा स्थूलधियोऽद्यतनाः केवलं भौतिकविज्ञानमेव विद्यासर्वस्वं मन्यमानाश्चाक्षुषप्रत्ययगम्येऽप्यत्र सुस्पष्टे विषये विप्रतिपद्यमानाः सहसा नैव सहमता भवन्तीत्यहो तेषां बोधदारिद्र्यमज्ञता चेति वक्तव्यं भवेत् ।

न केवलं सूर्यस्यैवैकलस्य प्रभावोऽस्मिञ्जगति विद्यते प्रत्यक्षं प्रत्युतान्येषामपि चन्द्रादीनां ग्रहाणामपि प्रकाशादीनां प्रभावो भवति नाम नूनम् । विषयमेतं समधिकं स्पष्टीकर्तुमधुना सूर्यवच्चन्द्रस्यापि

प्रभावविषये किञ्चिदुच्यते—चन्द्रस्तावज्जलपिण्डरूपः। अर्थाच्चन्द्रमसि जलीयतत्त्वानां तरलरस-रूपाणामाधिक्यं वर्तते। स च पुनः सूर्यकिरणस्पर्शादेव प्रकाशते। स्वयं जलरूपोऽपि चन्द्रमाः सूर्य-रश्मिभिः सम्पृक्तः शीतलां द्युतिं ज्योत्स्नारूपां सर्वतोदिक् प्रसारयति। तदेवाहुर्भास्कराचार्यवर्याः—

तरणिकिरणसङ्गादेष पीयूषपिण्डो दिनकरदिशि चन्द्रश्चन्द्रिकाभिश्चकास्ति।
तदितरदिशि बालाकुन्तलश्यामलक्ष्मीर्घट इव निजमूर्तिच्छाययैवातपस्थः॥ १॥

सोऽयं चन्द्रः शीतलां द्युतिमात्मीयां विकिरञ्जागतिकान् सर्वांश्चेतनान् प्रभावयति स्वचन्द्रिका-किरणजालैः। यथा सूर्ये प्रकाशोष्णताधिक्यं तथैव चन्द्रे रसाधिक्यं शीताधिक्यं च वर्तते। यतश्चन्द्रकिर-णानां प्रभावः शीतलो रसमयश्चाह्लादकरोऽनुभूयतेऽस्माभिः। चन्द्रस्य किरणानां सूक्ष्मप्रभावान्मनः प्रहृष्यति, जलं तरंगायते, वनस्पतिष्वोषधिषु रसात्मकेषु तरलद्रव्येषु च रसपरिपाकस्तरलतादयो गुणा सम्भवन्ति। चान्द्रमसं ज्योतिर्जीवानां भौतिके देहे तथौषधिप्रभृतिषु पदार्थेषु च रसं पुष्णात्यमृतमय-रश्मिभिस्तस्मादेवायमोषधिपतिरित्युच्यते। मानवानां व्यष्टिपिण्डे मनस्तत्त्वप्रतिष्ठा चन्द्रमस एव भवति। तदेवोक्तं श्रुतौ—'चन्द्रमा मनसो जातश्चक्षोः सूर्योऽजायत। श्रोत्राद्वायुश्च प्राणाश्च मुखादग्नि-रजायत॥ १॥' इति स्मृतिप्रस्थानेऽपि गीतासु भगवत्पादा इममेवार्थं प्राहुः—

'पुष्णामि चौषधीः सर्वाः सोमो भूत्वा रसात्मकः॥' गीता, अध्यायः १५ श्लोकः १३

पुनः सर्वेषां सचेतनानां प्राणिनां मनस्तत्त्वनिर्माणे चन्द्रमसस्तेजसो महत्त्वपूर्णः प्रभावो भवति। एवमेव सर्वेषामेव ग्रहाणां तत्तत्तेजोविशेषाणां प्रभावाः सचेतनेष्वचेतनेष्वपि चानिवार्यतया पतन्त्येव। प्रत्यक्षमनुभूयमानेऽस्मिन् विषये नास्त्येवाणीयानपि सन्देहशंकावसरस्तथापि विषयस्यास्य स्पष्टी-करणाय सर्वेषामेव ग्रहाणां प्रभावविषये श्रीमद्वराहमिहिराचार्यैर्बृहज्जातके प्रोक्तमेतच्छन्दोऽवधारणीय-मत्र प्रसंगोपात्तम् —

कालात्मा दिनकृन्मनस्तुहिनगुः सत्त्वं कुजो ज्ञो वचो
जीवो ज्ञानसुखे सितश्च मदनो दुःखं दिनेशात्मजः।
राजानौ रविशीतगू क्षितिसुतो नेता कुमारो बुधः
सूरिर्दानवपूजितश्च सचिवौ प्रेष्यः सहस्रांशुजः॥ १॥

अयमभिप्रायो यत् सचेतनानां प्राणिनां किलात्मतत्त्वनिर्माणे सूर्यतेजसस्तन्मात्राणां, मनस्तत्त्व-प्रतिष्ठायां चन्द्रमसः, बलसंचारे भौमस्य, वाग्विकाशे बुधस्य, ज्ञानसुखयोः प्रतिष्ठायां बृहस्पतेः, कामसंकल्परचनायां शुक्रस्य, दुःखानुभूतिसंवेदनादितत्त्वावस्थितौ शनेश्च तेजस्तन्मात्राणाम् प्रामुख्येनोप-योगो भवति। एवं हि जीवेषु शासनाधिकारक्षमतानिर्माणे सूर्यचन्द्रयोः, नेतृत्वशक्तिसंचारे भौमस्य क्रीडाप्रियत्वसौकुमार्यमार्दवादिगुणरचनायां बुधस्य, मन्त्रित्वराजनीतिज्ञतादिगुणक्षमतानिर्माणे गुरु-शुक्रयोस्तथा च दूतत्वादिगुणनिर्मितौ शनैश्चरस्य तेजसः सुमहान् प्रभावो भवति।

नायं कल्पनाप्रसूतो भावात्मको वादविशेषः। वैज्ञानिकेन दृष्टिकोणेन विश्लेषणान्मनोबुद्धीन्द्रियगोचरो ज्ञानगम्योऽयं विषयः। वस्तुतो ग्रहाणां स्थितिः खगोले सौरमण्डले वर्तते। स्वस्वकक्षासु स्वकीयं गतिक्रममन्वटन्तो ग्रहास्तत्रत्ये वातावरणे स्वतेजसामाकर्षणविकर्षणाभ्यां ग्रहानन्यान्भूमिमण्डलं सर्वानपि खगोलस्थाञ्ज्योतिर्मयनक्षत्रतारकापिण्डान् प्रभावयन्तो भवन्ति, स्वयं चान्येषां तेजोरश्मिपुञ्जैः प्रभाविताः सन्तो निखिलब्रह्माण्डस्थलोकान् तत्रस्थाञ्जडचेतनांश्च स्वप्रकाशावपातानुपातप्रमाणं प्रभावयितुं प्रभविष्णवो भवन्ति। अतोऽत्र सौरे जगति वर्तमानस्य ग्रहनक्षत्रमण्डलस्य यथार्थस्थितिपरिचयाय किञ्चिदुच्यतेऽधस्तात्—

भूमेः पिण्डः शशांकज्ञकविरविकुजेज्यार्किनक्षत्रकक्षा–
वृत्तैर्वृत्तो वृतः सन्मृदनिलसलिलव्योमतेजोमयोऽयम्।
नान्याधारः स्वशक्त्यैव वियति नियतं तिष्ठतीहास्यपृष्ठे
निष्ठं विश्वं च शश्वत्सदनुजमनुजादित्यदैत्यं समन्तात्॥ १॥

सर्वतः पर्वतारामग्रामचैत्यचयैश्चितः। कदम्बकुसुमग्रन्थिः केसरप्रसरैरिव॥ २॥

—भास्कराचार्यः, सि. शि. गोलाध्याये

अत्र श्रीमद्भास्कराचार्यकृतं वासनाभाष्यमपि दृश्यताम्—

योऽयं मृदनिलसलिलव्योमतेजोमय इति पाञ्चभौतिको भूमेः पिण्डो वर्तुलाकारस्तद्बहिःस्थैः शशांकादिकक्षावृत्तैरावृतः सन्ननन्याधारः स्वशक्त्यैव नियतं निश्चितं वियत्याकाशे तिष्ठति। तत्पृष्ठनिष्ठं च जगत्। दनुजा दानवाः। मनुजा मानवाः। आदित्या देवाः। दैत्या असुराः। तैः समेतं समन्तात् तिष्ठति। शेषं स्पष्टार्थम्।

अत्र भारतीयखगोलविज्ञानोक्तप्रकारेण सर्वादौ केन्द्रमध्यवर्ति भूमण्डलं, ततो विधुबुधशुक्रसूर्यभौमगुरुशनीनां कक्षावृत्तानि क्रमशो वर्तन्ते, ततो नक्षत्रमण्डलमास्त इत्येव भारतीयज्यौतिषाचार्योक्तः खगोले भूमण्डल-ग्रहमण्डलानां च कक्षाक्रमः।

अथ च यूरोपादिविदेशीयानां वैज्ञानिकानां मते पृथ्वी चला सूर्यश्च स्थिरः। भारतीयो ज्योतिर्विदार्यभट्टः स्वसंहितायाम् पृथिव्याश्चलत्वमंगीचकार। तथाहि—"चला पृथ्वी स्थिरा भाति, भूपञ्जरः स्थिरो, भूरेवावृत्यावृत्य प्रातिभासिकावुदयास्तौ सम्पादयति ग्रहनक्षत्राणाम्।" इति। अतो धरायाश्चलत्वं सूर्यस्य च स्थिरत्वं भारतीयज्योतिर्विद्भिरंगीकृतमास्ते। तेषां मते पृथ्व्यादीनां ज्योतिष्पिण्डानां परिभ्रमणं सूर्यकेन्द्रकं ( Helio Centric भवति। खगोले ये ज्योतिष्पिण्डाः सूर्यकेन्द्रकं भ्रमन्ति ते ग्रहाः कथ्यन्ते ये च भूकेन्द्रकं (Ceo centric) भ्रमन्ति ते खलूपग्रहाः प्रोच्यन्ते। यथा चन्द्रः। अमीषां पाश्चात्यज्योतिर्विदां मते खगोले ग्रहाणां प्रत्येकं कक्षामण्डलं दीर्घवृत्ताकारं

भवति । तत्रैव च ग्रहा भ्रमन्ति । ते हि कक्षाणां दीर्घवृत्ताकारत्वे ह्याकर्षणशक्ति कारणं मन्यन्ते । तेषां मते ग्रहाणां कक्षाक्रम इत्थं वर्तते—सूर्यः, बुधः, शुक्रः, पृथ्वी, भौमः, गुरुः शनिरिति । पाश्चात्यानां मते यूरेनस, नेपच्यून, प्लूटो इत्याद्या केचिद्ग्रहा नवाविष्कृताः सन्ति परं ते वैज्ञानिकदूरवीक्षणादि-यन्त्रोपकरणैर्विना नान्ये ग्रहा इव चर्मचक्षुर्भ्यां दृक्प्रत्ययार्हा भवन्ति । अथ प्रसक्तानुप्रसक्तमेतन्मतं पाश्चात्यानामुल्लिखितं परं प्रस्तुतप्रकरणे भारतीयमेव कक्षाक्रमं स्वीकृत्य प्रकृतं विविच्यते ।

अथेदं ग्रहकक्षामण्डलं निरवलम्बे खगोले किमाधारं तिष्ठति ? कथं वा भूमिर्ग्रहाश्च स्वकक्षातो न प्रच्यवन्ते ? इति जिज्ञासायाम् भूमेराकर्षणशक्तिविषये किमपि विवेचनं नाप्रासंगिकमिति कृत्वा-त्रोच्यते—

मध्ये समन्ताद्ण्डस्य भूलोको व्योम्नि तिष्ठति ।
बिभ्राणः परमां शक्ति ब्रह्मणो धारणात्मिकाम् ॥ १ ॥ (सूर्यसिद्धान्ते)

श्रीमद्भास्कराचार्या अपि भूमेराकर्षणशक्तिविषये प्रोचुरेवम्—

यथोष्णतार्कानलयोश्च शीतता विधौ द्रुतिः के कठिनत्वमश्मनि ।
मरुच्चलो भूरचला स्वभावतो यतो विचित्रा बत वस्तुशक्तयः ॥ १ ॥
आकृष्टशक्तिश्च महीतया यत् खस्थं गुरुस्वाभिमुखं स्वशक्त्या ।
आकृष्यते तत्पततीव भाति समे समन्तात् क्व पतत्वियं खे ॥ २ ॥

( —सिद्धान्तशिरोमणौ )

एवमत्र ग्रहाणां भूमेश्च खगोले कक्षास्थित्याकर्षणशक्तिवर्णनादिदं स्पष्टं भवति यद्ग्रहमण्ड-लानां भूमेश्च परस्परमाकर्षणविकर्षणाभ्यां मिथः संतोलनमेव हि सर्वेषां ज्योतिष्पिण्डानामाधारहेतुः ।

अथ सूर्यादयो ग्रहाः स्वगतिक्रमेण कक्षासु किं प्रमाणं भ्रमन्ति ? तत्रोच्यते -

मासं शुक्रबुधादित्याः सार्द्धमासं तु मंगलः ।
गुरुस्त्रयोदशमितान्, सपादद्विदिने शशी ॥ १ ॥
राहुरष्टादशमितान् त्रिंशन्मासांच्छनैश्चरः ।
यथा राहुस्तथा केतू राशिभुक्ताः प्रकीर्तिताः ॥ २ ॥

अर्थात् स्थूलमध्यममानेन सूर्य एकं मासं, चन्द्रः सपादं दिनद्वयं, भौमः सार्द्धमेकं मासं, बुधो मांसमेकं, गुरुस्त्रयोदशमासान्, शुक्र एकं मासं, शनिस्त्रिंशन्मासान्, राहुरष्टादशमासान्, केतुश्च तथै-वाष्टदशमासान् यावदेकं राशिं भुङ्क्त इति गतिक्रमोऽयं ग्रहाणाम् ।

इत्थमाकाशे नियतं गतिक्रममनुवर्तमानाः स्वकक्षासु भ्रमन्तोऽपि ग्रहा मनुष्याणामस्माकं कथं न गतिशीला लक्ष्यन्त इत्युक्तं भवति—

यान्तो भचक्रे लघुपूर्वगत्या खेटास्तु तस्यापरशीघ्रगत्या ।
कुलालचक्रभ्रमिवामगत्या यान्तो न कीटा इव भान्ति यान्तः ।। १ ।।

एवं खगोले परिभ्रमतां ग्रहाणां तेजांसि निखिलमपि खगोलं भूगोलं सजीवं निर्जीवं च जगत्प्रभावयन्ति । ग्रहाणां स्वकक्षासु परिभ्रमतां तेजःपुञ्जो मिथो ग्रहानपि प्रभावयति । तेषां तेजसः परस्परं घातप्रतिघातैस्तेजोमयी स्थितिरपि प्रतिक्षणं परिवर्तते । खगोले ग्रहनक्षत्राणां भ्रमणान्नानाविधानि स्थित्यन्तराणि जायन्तेऽतस्तत्रस्थानां सर्वेषामेव तेजःपिण्डानां प्रभावपरिणामाः प्रकाशफलानि च सर्वतोभावेन ज्ञातुमसम्भवानि यतस्ते विभिन्नगुणधर्माणोऽन्तरिक्षे विराजन्ते । तेषामालोकप्रभावैर्भूलोके स्थितानां जीवानां पदार्थानां चोपरि या याः क्रिया प्रतिक्रियाश्च भवन्ति न ताः सर्वा अद्यावधि साकल्येनेदमित्थं सुसूक्ष्मं निरीक्ष्य स्थिरीकृता विद्यन्ते । तथापि सूर्यादीनां नवग्रहाणां वार्षिकी मासिकी दैनन्दिनी वा गतिः कैश्चिज्ज्यौतिषाचार्यैः प्रतिभावद्भिर्नलिकाबन्धनैर्गणितगणनाप्रकारैः शास्त्रचिन्तनैर्यन्त्रादिभिश्च सुविनिश्चित्य सिद्धान्ततः स्थिरीकृतास्ति या सहसा वर्षाणां सहस्रैरपि न व्यभिचरति । अतएवामीषां ग्रहनक्षत्राणां प्रभावाः स्वतन्त्ररूपा मिश्रितस्वरूपाश्च सुविनिश्चिताः सन्ति । तानेतान् प्रभावान् स्वयं ज्ञात्वा तत्परिणामजन्यानि शुभाशुभानि फलानि वानुभूय जगद्धितैषिभिर्ज्योतिर्विद्भिः स्वशिष्येभ्यो ज्ञानप्रदानाय विवृतानि । विषयमेतं स्पष्टीकर्तुं ग्रहतेजसां प्राकृता मूलस्वभावास्तत्तेजोमिश्रणसम्भवाः स्थितयो बलाबलं सुयोगाः कुयोगाश्च निरूपिता वर्तन्ते । तस्मादेव हि ज्योतिषशास्त्रेऽश्विन्यादीनां नक्षत्राणां, मेषादीनां राशीनां, सूर्यादीनां ग्रहाणां च गुणकर्मस्वभावा वर्णिताः सन्ति । तदत्र श्रीवराहमिहिराचार्योक्तेन प्रकारेण ग्रहादीनां प्रकाशस्य देश्व वर्णादिविषये किंचिदुच्यते प्रसक्तानुप्रसक्तम्—

वर्णास्ताम्रसितातिरक्तहरितव्यापीतचित्रासिता
वह्न्यम्ब्वग्निजकेशवेंद्रशचिकाः सूर्यादिनाथाः क्रमात् ।
प्रागाद्या रविशुक्रलोहिततमःसौरेन्दुवित्सूरयः
क्षीणेंद्वर्कमहीसुतार्कतनयाः पापा बुधस्तैर्युतः ।। १ ।।

अयमाशयः— सूर्यः स्वयं ताम्रवर्णस्ततोऽसौ ताम्रवर्णस्य स्वामी । चन्द्रः शुक्लवर्णः श्वेतवर्णस्य स्वामी । भौमः स्वयमतिरक्तवर्णस्ततोऽसौ रक्तवर्णस्य स्वामी । बुधो हरितवर्णो हरितरंगाधिपः । गुरुरतिपीतवर्णः पीतवर्णाधिपतिः, शुक्रश्चित्रविचित्रवर्णो विचित्रवर्णानां पतिः । शनिः कृष्णवर्णस्य स्वामी । सारांशोऽयं यद्धि सूर्यादीनां ग्रहाणां तेजस्तत्तद्वर्णविशिष्टं वर्तते । तच्च स्वधर्मणो वर्णास्तत्तद्वर्णयुक्तान् पदार्थाञ्जीवान् देशांश्चानुकूल्येन प्रातिकूल्येन वा प्रभावयन्ति ।

एवमेव सूर्योऽग्निधर्मविशिष्टस्तस्मात्तस्याधिपतिरग्निः । चन्द्रो जलधर्मविशिष्टस्तदधीशो वरुणः । भौमोऽग्निधर्माधिकस्तत्स्वामी चाग्निकुमारः कार्तिकेयः । बुधः सहधर्मग्रहणशीलस्तत्प्रभुर्विष्णुः । गुरुः

प्रभावधर्मविशिष्टस्तत्स्वामीन्द्रः । शुक्रो वैद्युतीं प्रभावधारां धत्ते ततस्तत्स्वामिनीन्द्राणी, शनिश्च रजोगुणप्रधानं तेजो दधाति तस्मात्तत्पतिर्ब्रह्मे ति ग्रहाणां प्रभावपरिचयाय कल्पितमेतदाचार्यैः ।

पुनः सूर्यः पूर्वां दिशं समधिकं प्रभावयति स्वतेजसा तस्मादयं पूर्वदिक्प्रभुः । अग्निकोणस्य शुक्रः । दक्षिणाशायाः पतिर्भौमः । नैऋत्यकोणस्य राहुः । पश्चिमाया दिशः शनिः । वायुकोणस्य चन्द्रः । उत्तराशाया बुधः । ईशानकोणस्य गुरुरधिपतिः परिभाषितः ।

अथ च कृष्णपक्षस्याष्टमीं तिथिमारभ्य शुक्लपक्षस्याष्टमीं यावदल्पप्रकाशः क्षीणश्चन्द्र सूर्यो भौमः शनैश्चरश्चैते ग्रहा रजस्तमःप्रकाशकिरणान्विकिरन्तः पापग्रहा इत्युच्यन्ते । तैरेतैर्यु तो बुधोऽपि पाप इत्युक्तम् । वस्तुतो बुधः स्वयं सौम्योऽपि सन् पापग्रहाणां संगत्या पापो भवतीत्यभिप्रायः । एभ्यः पापग्रहेभ्योऽवशिष्टाः पूर्णचन्द्रः स्वतन्त्रबुधः सौम्यग्रहसंयुतो वा, गुरुः शुक्रश्च सौम्या ग्रहा भवन्ति । अन्यच्च—

बुधसूर्यसुतौ नपु ंसकाख्यौ, शशिशुक्रौ युवती नराश्च शेषाः ।
शिखिभूखपयोमरुद्गणानां, वशिनो भूमिसुतादयः क्रमेण ॥ १ ॥

यतो बुधस्य तेजोमण्डलं सदैव सूर्यादिग्रहाणां तेजोभिः समधिकं प्रभावितं तिष्ठति शनैश्चरस्य च मन्दप्रकाशत्वादतिदूरत्वाच्च भूमिस्थिताञ्जडचेतनान् प्रत्यक्षतः स्वतेजोदानेन, विनान्यग्रहाणां तेजोमिश्रणम्, समधिकं प्रभावयितुं न प्रभवतस्ततस्तावेतौ ( बुधशनी ) नपु ंसकावित्युक्तम् । शशी शुक्रश्चातिमृदुलं कोमलमाह्लादि तेजः प्रयच्छतस्तस्मात्तौ युवती इति प्रोक्तौ । सूर्यभौमगुरवः स्वशक्त्यैकनिर्भरं स्वच्छन्दं तेजः प्रयच्छन्ति ततस्ते पुरुषा इति परिभाषितम् । वस्तुतो ग्रहा न मनुष्या इव पुंनपुंसका युवतयो वा भवन्ति परं तेषां स्वतेजोविकिरणे तत्सामर्थ्यप्रभावानुपातलब्धिजिज्ञासयैव तेषामेते तेजोधर्मा निरूपिताः ।

एवं हि भौमेऽग्नितत्त्वाधिक्यात् स वह्नेर्वशंवदः । पार्थिवतत्त्वाधिकाद्बुधो भूस्वामिकः । वृहस्पतिः खगोलीयाकाशतत्त्वविशिष्टतया जलस्वामिकः । शनैश्चरश्च वायुतत्त्वप्राधान्याद्वायोर्वशे तिष्ठतीति प्रोक्तम् । अन्यच्च—

विप्रादितः शुक्रगुरू कुजार्कौ शशी बुधश्चेत्यसितोऽन्त्यजानाम् ।
चन्द्रार्कजीवाज्ञसितौ कुजार्कौ यथाक्रमं सत्वरजस्तमांसि ॥ १ ॥

गुरुः शुक्रश्च ब्राह्मणानां प्रभू, सूर्यभौमौ क्षत्रियाणां पती, चन्द्रबुधौ वैश्यानां स्वामिनौ, शनिश्च शूद्राणामधिपः । यतो ग्रहाणाममीषां तेजसां प्रभावा मनुजेषु तथाविधगुणधर्माः परिपतन्तस्तांस्तथाविधशीलाचारान् कुर्वन्तीति फलादेशप्रयोजनादेतदुक्तम् । अथ पुनर्ग्रहेषु सूर्यचन्द्रगुरवः सत्वतेजःप्रधानाः सात्त्विकाः, बुधशुक्रौ रजोगुणप्रधानौ, भौमशनैश्चरौ च तमोगुणप्रधानौ भवत इति प्राचामाचार्याणां ग्रहाणां तेजःप्रभावगुणधर्मविश्लेषणादनुभवजन्यप्रतीतिः ।

यदा ग्रहः स्वगतिक्रमेणैकं राशिमतिक्रम्यान्यं व्रजन् भवति तदा तस्य तेजस्तत्रानुकूलं प्रतिकूलं वा प्रभावं पूर्वत एव तनोति। स्वतेजोरश्मिप्रभावादग्रे वर्तमानं तेजोमण्डलं वातावरणं च किञ्चिदान्दोलयति। तथा चोक्तम्—

सूर्यः पञ्चदिनं शशी त्रिघटिकं भौमोऽष्टवारात्मकं
सप्ताहं भृगुजश्च सोमतनयो मासद्वयं वै गुरुः।
षाण्मासं च शनैश्चरस्तदधिकं राहुश्च मासत्रयं
केतुश्चेति दिशत्यवश्यमिह तद्गन्तव्यराशेः फलम्॥ १॥

सूर्यो यदा स्वाधिष्ठितं राशिमतिक्रम्याग्रे स्थितं राशिं प्रत्यग्रं सरति तदा तत्किरणजालं पञ्चदिनेभ्यः पूर्वमेव हि गन्तव्यं राशिं प्रभावयितुं प्रारभते। चन्द्रो घटिकात्रयपूर्वं, भौमोऽष्टदिनपूर्वं, बुधो भृगुजश्चैकसप्ताहपूर्वं, गुरुर्मासद्वयात् पूर्वं, शनिः षण्मासेभ्यः प्राक् राहुः केतुश्च मासत्रयात्पूर्वमेव स्वस्थानादग्रे वर्तमानं ग्रहराशिकक्षामण्डलं प्रभावयन्ति।

एवं प्राचीनैरार्यैर्महर्षिभिः शास्त्रज्ञानेनाप्तवचनानुरोधात्प्रत्यक्षानुभवेन च ग्रहाणां राशीनां नक्षत्राणां च तेजोमण्डलानां वातावरणानां देशकालपात्रापेक्षया सूक्ष्मं विविच्य समन्वयव्यतिरेकाभ्यां ते ते परिणामाः प्रभावानिष्पत्तयश्च परिभाषिताः। ज्योतिःशास्त्रे ता एता परिभाषा असंख्या अनन्ताश्च प्रोक्ताः। आध्यात्मिकाधिदैविकाधिभौतिकफलादेशसिद्धये पारिभाषिकमेतत्सर्वं साङ्गोपाङ्गं जानञ्ज्योतिर्विद्वेदवेदांगदर्शनविज्ञानादिकं लौकिकमनुभवं चात्मनि दधानो गुरुमुखादभ्यस्तवाङ्मयः सत्यवाक् सदाचारो महता श्रमेण च फलादेशं च कर्तुं प्रभवेन्नान्यः। यतो विषयोऽयमतीव सूक्ष्मो गंभीरश्च। अत्र लेखविस्तृतिभिया पुनः पुनरुक्तिदोषाशङ्कया स्थालीपुलाकमाश्रित्य संक्षेपादिदमेव निवेद्यते यद्धि नलिकाबन्धादिसाधनैर्यन्त्रोपकरणैर्वेधजन्यानुभवैः स्थूलैः सूक्ष्मैश्च निरीक्षणैर्ग्रहाणां तेजःप्रभावान्निपुणं ज्ञात्वैव फलं वक्तुं युज्यते प्रकृष्टप्रतिभावद्भिः सतताभ्यासशीलैरध्यवसायशालिभिः। न केवलं ग्रहाणामेव प्रत्युत राशीनां नक्षत्राणामपि च भारतीयैर्ज्योतिर्वित्पण्डितैस्तेजसां प्रभावविषये बहु विचिन्त्य कानिचित्तथ्यानि चाविष्कृतानि विद्यन्ते। यथा नक्षत्रवृत्तेऽश्विनी-भरणी-कृत्तिकाया एकपादपर्यन्तं मेषराशिः। तावति स्थाने यदा कोऽपि ग्रहः संचरति तदा तत्स्थानीयं तेजः स्ववातावरणजन्यैर्गुणधर्मैस्तद्ग्रहस्य तेजोंऽशतः प्रभावयति। ततो द्वादशराशीनां प्रभावाः पृथक् पृथग् वर्णिता विद्यन्ते। यथा मेषराशिविषये —

आद्यः स्मृतो मेषसमानमूर्तिः कालस्य मूर्द्धा कथितः पुराणैः।
सोऽजाविकासं चरकन्दराद्रिस्तेनाग्निधात्वाकररत्नभूमिः॥ १॥

एवं वृषभादीनामपि राशीनां गुणधर्मस्वभावाः परिभाषिताः। एवमेवाश्विन्यादीनां नक्षत्राणामपि प्रभावास्तत्तत्स्थानजन्यवायुमण्डलजाः परिभाषिता विद्यन्ते।

इत्थमाकाशे संचरतां ग्रहाणां तेजःप्रभावा भूमिस्थितसचेतनाचेतनेषु पदार्थेषु पतन्ति ते च सर्वेषां जीवने शुभाश्चाशुभाश्चानुकूल्येन प्रातिकूल्येन वा स्वपरिणामान् दर्शयन्त्येवेति सुनिश्चितम् । ते च ग्रहराशिनक्षत्रादीनाम् प्रभावाः कदा कीदृशाः किंपरिणामाः किंपरिमाणाश्च देशकालपात्रापेक्षया सरलवक्रतिर्यक्कोणगतदृष्ट्या न्यूना वाधिका वा कियन्तः कथं जायन्ते तत्तारतम्यानुपाताश्च के भवन्तीति विभावयितुमेव पूर्वाचार्यैर्जातकसंहितासु नानादृष्टिभिः परिभाष्यन्ते फलाभिसन्धिं निर्णेतुं बलाबल-तत्त्वमीमांसातिगभीरा विहितास्ति । अभीष्टस्य प्रमेयस्योपरि सूर्यादिग्रहाणां प्रभावं विनिश्चेतुं तत्तद्देशे काले पात्रे प्रभावं ज्ञातुं ग्रहणराशिसंयोगात् सूर्यचन्द्रयोः परस्पराकर्षणविकर्णणजन्यं तेजो-निष्कर्षं ज्ञातुं होराविचारस्तृतीयांशानुपाततस्तेजोमानं विवेचयितुम् द्रेष्काणविचार एवमेवसप्तमांश-नवमांशद्वादशांशत्रिंशांशादीनां विचारः षड्वर्गेषु वैज्ञानिकदृष्ट्या ज्योतिर्विद्भिः सुसूक्ष्मं क्रियते । पुन-र्ग्रहाणामेकचरणद्विपादत्रिपादसम्पूर्णदृष्टिगतसम्बन्धादपि तत्तेज सदाहानप्रदाने निर्णीयेते । खेटानां मित्रसमशत्रुत्वकल्पनयापि च तत्तेजःप्रभावाणां मानं स्थिरीक्रियते । को नु खलु ग्रहः सबलो वा निर्बलो वा कस्मिन् कालखण्डे स्वानुकूलां प्रतिकूलां वा स्थितिमासाद्य फलप्रदानाय सक्षमो वा क्षमो वास्यादिति निर्णयाय पुरुषायुषो विंशोत्तरशतवर्षात्मकमष्टोत्तरशतवर्षप्रमाणं वा मानं स्वीकृत्य तत्तद्ग्रहस्य दशान्तर्द-शासु फलादेशव्यवस्था विधीयते । एवं ग्रहाणां खगोलीयस्थितिवशात्तेषां पारस्परिकसम्बन्धविमर्शैर्योगा-योगविचारमनु तत्तेजःप्रभावान् सम्यग्विचार्य फलमादिशन्ति जगद्धितमभीप्सवो दैवज्ञाः ।

प्राचीनैराचार्यैः शास्त्रज्ञानेन, सूक्ष्मवेधादिजन्यस्वानुभवेन, सार्वभौमफलादेशाय, व्यक्तिगत-जीवने ग्रहफलादेशाय चासंख्या विभिन्नाश्च सुयोगाः कुयोगा वा परिभाषाक्रमेण निरूपिता वर्तन्ते । खगोले भ्रमतां ग्रहाणामित्थं सुदूरं गम्भीरं च प्रभावं विचार्य तेषां सबलत्वं निर्बलत्वं वा निपुणं विनिर्णीय फलादेशः क्रियते । ज्ञानविज्ञानपारदृश्वभिर्गूढानुभवशालिभिः शास्त्रोक्तं सत्यं प्रत्यक्षं जिज्ञासुभिश्चमत्कारकौतुकप्रियैर्जगद्धितैषिभिर्मार्मिकैर्दैवज्ञैरित्थं प्रयत्यते ।

इत्थमुपर्युक्तप्रकारेण खगोलस्थितं ग्रहमण्डलं स्वतेजसा ब्रह्माण्डे वर्तमानान् सर्वानेव लोकान् सदा सर्वदा सर्वतः प्रभावयदास्ते । एवं सति तदस्माकं भूगोले स्थितान् सर्वाञ्जीवान् पदार्थांश्च नूनं प्रभावयति तदेतदतीव स्वाभाविकम् । प्रत्यक्षं परिदृश्यमाने सततं चानुभूयमानेऽप्यत्र विषये केषांचिज्जड-मतीनां नव्यानां नास्तिकानामविश्वासो विप्रतिपत्तिरप्रत्ययश्चास्ते तत्तेषां स्वास्तित्व एव सन्देह इवा-ज्ञानदुर्विलसितम् सूर्यचन्द्रयोर्ग्रहणं, भूकम्पः, प्रभञ्जनोऽतिवृष्टिरनावृष्टिः, सुभिक्षं, दुर्भिक्षं महामारिर्ज-लविप्लवोऽग्निभयमुत्पाता युद्धमित्यादीनि घटनान्तराणि ग्रहप्रभावैरेव जायन्ते । उल्कापातराज्यभ्रंशाद-योऽपि ग्रहाणामेव प्रभावाद्भवन्ति । अग्निविस्फोटकोपो विषवृक्षोत्पत्तिर्हिमशर्करापातो विचित्रकृमि-कीटानामुत्पत्तिश्चापि ग्रहप्रभावतः । कामं कोऽपि ग्रहाणां प्रभावं मन्यतां न वा मन्यतां परन्तु पाञ्च-भौतिकेऽस्मिन्मानवदेहपिण्डे यथाकाशवाय्वग्निजलभूमीनां प्रभावा अनिवार्यतः पतन्त्येव तथैव ग्रह-

प्रभावा अपि निर्निरोधमनिवार्यतया जायन्त एवात एवाचार्या 'गृह्णाति स्वतेजसान्यान् प्रसह्याक्रम्यादत्ते तत्तेज इति ग्रहः' इति व्युदपादयन् ।

अथाधुना ग्रहराशिसम्भवानां जन्मकुण्डली-वर्षकुण्डलीप्रश्नकुण्डलीनां विषयेऽपि किञ्चिदुक्त्वोपसह्रियतेऽयं लेखः—

खगोले स्थितानां ग्रहाणां या सत्या वास्तविकी स्थितिस्तस्या मानचित्रमेव कुण्डली । आकाशस्थग्रहराशिनक्षत्राणां प्रतिकृतिरूपेयं कुण्डली स्पष्टगणितसिद्धा फलाफलविमर्शे प्रधानं साधनम् । अत्र कुण्डल्यां तिथिवारनक्षत्रयोगकरणादीनां स्वाभीष्टसमये गणितसिद्धा स्थितिरङ्किता भवति । मेषादयो राशयो द्वादश संख्याकाः १,२,३,४,५,६ प्रभृतिभिरङ्कैः सङ्केतरूपैः सूर्यादयो नवग्रहाश्च स्वस्वकक्षासु यथास्थानं स्थिताः सू.चं.मं.बु. इत्याद्यैरक्षरचिह्नैः सौकर्याय संक्षिप्य लिखिता भवन्ति । मनुष्यस्य जन्मसमये वर्षप्रवेशसमये प्रश्नकाले विवाहराज्याभिषेकादिमुहूर्तसमये वा या खगोलगता ग्रहस्थितिः सात्र कुण्डल्यां चित्रिता भवति । सर्वादौ तत्र कुण्डल्यां तदा पूर्वक्षितिजे क्रान्तिवृत्तस्या राश्यादिर्यः प्रदेशो लग्नो भवति स एव लग्नमिति स्वीकृत्य राश्यंशसङ्केतेन लिखितो भवति । तथ चोक्तं श्रीमद्भास्कराचार्यैः सिद्धान्तशिरोमणेर्गोलाध्याये—

यत्र लग्नमपमण्डलं कुजे तद्गृहाद्यमिह लग्नमुच्यते ।
प्राचिपश्चिमकुजेऽस्तलग्नकं मध्यलग्नमिति दक्षिणोत्तरे ॥ १ ॥

यथा चतुरङ्गक्रीडापट्टे ( शतरञ्ज ) चतुःषष्ठीकोष्टात्मके द्वात्रिंशद्गुटिकाः संस्थाप्य स्वगतिक्रमेण चलन्तीनां तासां परस्परसम्बन्धाद्बलाबलं विचार्य जयपराजयौ निर्णीयेते तथैवात्र कुण्डल्यां द्वादशराश्यात्मकेषु कोष्ठेषु यथास्थानं स्थितानां नवग्रहाणां स्थानगतदृष्टिगतनानाविधैः सम्बन्धैस्तत्तेजसामाकर्षणवशाद्बलाबलं योगकारकत्वं फलदानसक्षमत्वं वाक्षमत्वं च विचार्यते । भूवलयस्थितानां सर्वेषामेव जडचेतनानां ग्रहाणां तेजसा साकं सम्बन्धः—विशेषतः सर्वोत्कृष्टतेजसोः सूर्यचन्द्रयोः—क्षितिजेन सह सूर्यवृत्तस्याधिका सापेक्षता भवति यतो ग्रहाणां प्रकाशकिरणघाताः प्रतिघाताश्च तत्रैव प्राथम्येन पतन्ति तत्स्थानं च सर्वाधिकं प्रभावयन्ति ततस्तत्स्थानं सर्वप्रथमं लग्नाख्यं स्वीक्रियते बुधैः कुण्डलीषु । लग्नोपरि ये ये ग्रहतेजसां प्रभावाः पतन्ति तैरेव मनुष्यस्य देहबन्धसौष्ठवं रूपं सौन्दर्यं बलमायुर्वर्णं इत्यादि विचार्यते । मातुर्गर्भाद् सद्यः प्रसूतश्चेतनो व्यष्टिपिण्डो भौतिकवातावरणस्य जलवायूष्मणां देशस्य कालस्य ग्रहाणां च प्रभावान् गृह्णन् जीवनक्रमे श्वासोच्छ्वासैः प्रवर्तते । यद्यपि जन्मतः पूर्वमेव मातृगर्भे रजोवीर्यसंयोगाज्जातो भ्रूणरूपो गर्भोऽप्रत्यक्षतो ग्रहाणां तेजः समादत्ते । जीवनसम्बन्धिनः सर्वेऽपि गुणकर्मस्वभावा उत्कर्षापकर्षाः स्वच्छन्दैर्मिश्रितैर्वा प्रभावैर्ग्रहतेजसां जायन्ते मनुष्याणाम् । यथा प्रागुक्तं यद्ग्रहाणां तेजःप्रभावा जडचेतनेषु नियतं पतन्त्येव ते च मातुर्गर्भे स्थितस्य भ्रूणस्याप्यङ्गनिर्माणे शरीरमनोवाग्बुद्ध्यादितत्त्वरचनायामपि प्रभवन्ति सुनिश्चितम् । तदेवाहुर्वराहमिहिराचार्या बृहज्जातकस्य निषेकाध्याये—

कुजेन्दुहेतु प्रतिमासमार्तवं गते तु पीडर्क्षमनुष्णदीधितौ ।
अतोऽन्यथास्ते शुभपुंग्रहे क्षिते नरेण संयोगमुपैति कामिनी ॥ १ ॥

अत्रायममिप्रायो यद्भौमः स्वतेजोरश्मिषु रजस्तत्त्वांशमाधिक्येन दधाति तस्मादेव स रक्तोऽङ्गारको रुधिराढ्यो भूपुत्रश्चेति कथ्यते । भौमस्य प्रकाशकिरणाः स्त्रीषु यन्नैसर्गिकं रजो भवति तद् क्षोभयन्ति । एवमेव चन्द्रो जलीयतत्त्वानामात्मन्याधिक्यं धत्ते । अतो भौमचन्द्रयोस्तेजःस्पर्शाद् स्त्रीणां गर्भान्तःस्थितान् रजःपरमाणून् संक्षोभ्य मासि मासि गर्भाधानयोग्यतामापादयति । इत्थं सृष्टेर्मूलभूततत्त्वानां रजोवीर्यादीनामपि क्रियाशीलतायाः प्रेरका भवन्ति ग्रहाः । सृष्ट्युत्पत्तौ स एव ग्रहाणामरम्भवादः ।

अथ मातुर्गर्भे मासक्रमेण वृद्धिं गच्छतो भ्रूणस्य विकाशेऽपि च ग्रहतेजसः प्रभाव एव कारणमित्याहुराचार्याः ।

तथा हि—

कललघनाङ्कुरास्थिचर्माङ्गचेतनाः
सितकुजजीवसूर्यचन्द्रार्किबुधाः परतः ।
उदयपसूर्यचन्द्रनाथाः क्रमशो गदिता
भवन्ति शुभाशुभं च मासाधिपतेः सदृशम् ॥ १ ॥

अर्थात् स्त्रीणां गर्भे पुरुषसंयोगान्निषिक्तं रजोवीर्यमिश्रणरूपं तरलं कललं प्रथममासे तिष्ठति । तच्च शुक्रतेजःप्रभावाद्भवति । ततः प्रथममासस्य स्वामी शुक्रः प्रोक्तः । द्वितीये मासि तद् कललं घनत्वे परिणमति । भौमतेजसः प्रभावात्तस्माद् द्वितीयमासस्य स्वामी भौमः कथितः । तृतीये मासेऽङ्कुरा जायन्त गुरोस्तेजसः प्रभावेण, ते चाङ्कुरप्ररोहा गुरुप्रयोजितास्ततस्तृतीयमासाधिपो गुरुरुक्तः । चतुर्थे मासेऽस्थ्नां विकाशो भवति सूर्यप्रभावात्ततो रविरेव चतुर्थमासस्य पतिः । पञ्चमे मासि चर्मसम्भवश्चन्द्रतेजःप्रभावस्तमाच्चन्द्रः पञ्चममासाधिपतिः । षष्ठे मासे शरीरावयवानां निर्माणं भवति तच्च शनिप्रभावतस्तस्माच्छष्ठस्य मासस्य स्वामी शनिरुक्तः । सप्तमे मासे गर्भस्थिते बाले चेतनाप्रतिष्ठा भवति सा च बुधस्य तेजसा जायते ततः सप्तममासाधिपो बुधो गदितः । एवमेवाष्टमे नवमे दशमे च मासे क्षुत्तृड्वेगप्रसवाः क्रमशो लग्नेशसूर्यचन्द्राणां तेजःप्रभावात्सम्भवन्ति ततस्तेऽष्टमनवमदशममासानां स्वामिनः प्रोक्ताः । एवं गर्भाधानात्प्रसवपर्यन्तं गर्भे स्थितस्य शिशोर्ग्रहप्रभावा जायन्त इति सुस्पष्टमेव ।

न केवलं सचेतनेष्वेव प्रत्युत वृक्षलतागुल्मपादपपत्रपुष्पफलादीनामप्युत्पत्तौ विकाशे च ग्रहाणां तेजो महान्तमेव प्रभावमर्पयति । तथा चोक्तं बृहज्जातके वियोनिजन्माध्याये वराहमिहिराचार्यैः

अन्तःसाराञ्जनयति रविर्दुर्भगान् सूर्यसूनुः
क्षीरोपेतांस्तुहिनकिरणः कण्टकाढ्यांश्च भौमः ।

वागीशज्ञौ सफलविफलान् पुष्पवृक्षांश्च शुक्रः ।
स्निग्धानिन्दुः कटुकविटपान् भूमिपुत्रस्तु भूयः ॥ १ ॥

अनेन ज्ञायते यत्सूर्यस्य तेजो वृक्षाणामन्तःसारनिर्माणेऽधिकां योग्यतां दधाति । शनिर्दुर्भगान् मनसोऽरुचिकरान् वृक्षान् रचयति स्वतेजःकिरणैः । चन्द्रकिरणाः क्षीरिणामन्तर्दुग्धवताम् वृक्षाणामुत्पादने तत्परमाणून् सविशेषं प्रेरयन्ति । कण्टकवृक्षाणामुत्पत्तौ भौमस्य तेजोरश्मयः प्रभवन्ति । फलवतां वृक्षाणां निर्माणे विकाशे च गुरोस्तेजो महत्प्रभवति । बुधः फलरहितानां वृक्षाणां निर्माणे स्वतेजसा प्रभवति । चित्रविचित्रवर्णान्मनोहरान् सुगन्धयुक्तान् पुष्पवतो वृक्षाञ्जनयितुं स्वतेजोमयूखैः प्रभावमर्पयति शुक्रः । पुनश्चन्द्रः स्निग्धान् भौमश्च कटून् विटपान् स्वकिरणैरधिकाधिकं प्रभावयति । एवमन्तश्चेतनेषु वृक्षादिषु स्थावरपदार्थेषु धात्वादिषु चापि ग्रहाणां प्रभावाः सुसूक्ष्मं विचारणया विज्ञानसम्मता जायन्ते । ततश्चोक्तम्—

ग्रहा राज्यं प्रयच्छन्ति ग्रहा राज्यं हरन्ति च ।
ग्रहैर्व्याप्तमिदं सर्वं त्रैलोक्यं सचराचरम् ॥ १ ॥

एवं ग्रहस्थितेर्जीवने प्रत्यक्षं प्रभावे विद्यमानेऽपि सति ज्यौतिषशास्त्रानुसारं फलादेशकथने नानाविधाः कठिनता भवन्ति । सर्वादौ ज्यौतिषशास्त्रस्य गणितप्रकरणस्य—व्यक्तगणितस्य-अव्यक्तगणितस्य-रेखागणितस्य-त्रिकोणमिति-गणितस्य विद्युद्गणित-ध्वनिप्रकाशवायुवेगगुरुत्वाकर्षणादिसिद्धान्तानामुच्चगणितस्य च ज्ञानं साङ्गोपाङ्गमतीवावश्यकम् । ततः खगोलविज्ञानस्य सोपपत्तिकं ज्ञानं ग्रहगतीनां नलिकाबन्धादियन्त्रसाधनैर्वेधादिभिः प्रक्रियाभिर्दृढप्रत्ययानुभवः, प्राचीनाचार्यैः संस्थापितानां शास्त्रसिद्धान्तानां नव्यवैज्ञानिकानुभावानां च यथावज्ज्ञानमात्मप्रतीतिस्तीव्रा जिज्ञासा, गुरुमुखाच्छास्त्रपाठश्रवणं सतताभ्यासो वेदवेदाङ्गानां दर्शनसाहित्यादीनां प्रतिपत्तिर्भूगोलेतिवृत्तभूगर्भविद्याप्राणिशास्त्रवनस्पतिखनिजतत्त्वानां ज्ञानं चातीवावश्यकम् । भौतिकविज्ञानरसायनशास्त्रस्वरोदयशास्त्र-रमल-केरल-जातक-ताजिकसिद्धान्त-संहिताहोरा-सूर्यचन्द्रोपराग-धूमकेतुपातादीनां ज्ञानं, देशकालपात्रादीनां मनोविज्ञानं, स्थितप्रज्ञता, ग्रहाणामुदयास्तशृङ्गोन्नतियुतिपातसाधनं, निरयनसायनविवेकस्ततो ग्रहगणितेऽपेक्षितबीजसंकारादिविभिन्नविषयाणां याथातथ्यं ज्ञानं च दधानाः सदाचाराः सच्चरित्रा हितमिततथ्यभाषिणो वाक्सिद्धिं प्राप्ता इष्टदेवतागुरुकृपामाश्रिता लोकहितैषिणो मनीषिणो ज्यौतिषाचार्या भगवति परमात्मनि परमेश्वरे दृढं श्रद्दधानाश्च यदा फलादेशे निष्कामं प्रवर्तन्ते तदैवैतदस्माकम् फलितशास्त्रं सत्यमेव भूतभविष्यद्वर्तमानसमयोपयुक्तं तात्त्विकं चमत्कारि च प्रमाणयितुं शक्नुयुः ।

अद्यत्वे धनलिप्सवो मौहूर्तिकाः केवलं पञ्चांगास्त्रशूरा मनस्यन्यद्वचस्यन्यत्कर्मण्यन्यदेवोभयलोकसिद्धये नीतिं मन्यमाना 'मुखमस्तीति वक्तव्यं दशहस्ता हरीतकी' इतिवत् फलादेशं कुर्वन्ति । प्रश्नकर्तारश्चापि स्वार्थसाधनधुरीणा मोघाशा मोघकर्माणो मोघज्ञाना विचेतसो दुष्टाभिसन्धिपूर्वकं विनैव

पारमार्थिकं किमपि प्रयोजनं ज्योतिर्विदः शतशः प्रश्नान् पृच्छन्ति पुनस्ते ज्योतिषं निन्दन्ति, तज्ज्ञान् प्रतारयन्ति तस्मादेवात्र लौकिकप्रपञ्चे कपटपाखण्डधूर्तताछलछद्‌ममायाजालविस्तारे विफला जायन्ते। तस्मादेवेदं प्रत्यक्षं सत्यं दृग्गोचरं दिव्यं भास्वरं सदपि ज्योतिर्विज्ञानं नास्तिकानां जडवादिनां मायापटूनामाक्षेपायैव केवलमवशिष्यते, इति महानेव खेदावसरः। यथाग्नेर्दाहात्मिकां शक्ति जानन्तोऽजानन्तो वा जनास्तत्स्पर्शाद्दाहदुःखमनुभवन्त्येव तद्वद्‌ग्रहाणामतिस्फूर्जत्प्रभावोऽत्र जगति सर्वेषां जडचेतनानां जीवनेऽनिवार्यतया जायत एवेति सुनिश्चितम्।

मानवानां जन्मसमये ये ये ग्रहाणां प्रभावा जायन्ते ते सर्वे जीवनपर्यन्तं स्थायिनो भवन्ति। वज्रलेपा इवेमे ग्रहतेजसां प्रभावाः कथमपि दूरीकर्तुं न शक्यन्ते तथापि छत्रेण सूर्यातपादिव यथा किंचिद्रक्षणं सम्भवति, ऊर्णावस्त्रैर्यथा शीतं निवार्यते तथा ग्रहाणां तेजोप्यौषधिसेवनाद्रोगशांतिरिव मन्त्रजपैर्दानैर्व्रतै रत्नादिधारणैर्यज्ञैरन्यैर्वोपायैः शास्त्रोक्तैः किंचिदनुकूलतां नेतुं शक्यते। सूर्यप्रभावस्यानुकूलतासम्पादनार्थं माणिक्यं, चन्द्रस्य मौक्तिकं, भौमस्य प्रवालं, बुधस्य नीलमणिं, गुरोः पुष्परागरत्नं, शुक्रस्य हीरकमणिं, शनेर्नीलमणिं, राहोर्गोमेदरत्नं, केतोश्च वैदूर्यरत्नं धारयितुं समर्थयन्ते ग्रहप्रभावविदो दैवज्ञाः। एवमेव सर्वेषामपि ग्रहाणामनुकूलतापादनाय दुस्तेजोऽपाकरणाय च ग्रहशान्त्यादिविधानं प्रोक्तं शास्त्रज्ञैराचार्यवर्यैः। केषांचित्पदार्थानामोषधीनां वस्त्राणां धातूनां पुष्पाणां च धारणं विधिविहितं प्रोक्तं शास्त्रज्ञैः। क्वचिद्‌ग्रहाणां प्रतिकूलप्रभावशमनाय केषांचित्पदार्थानां त्याग उत्सर्गश्च प्रोक्तः। एतत्सर्वं सविज्ञानं प्रसिद्धयति परन्तु तेषामेव कृते फलदं भवति ये जनाः प्राकृतिकं सरलातिसरलं जीवनक्रममनुवर्तमानास्तादृशीं कृत्रिमां दिनचर्यामङ्गीकृत्य शुद्धं सात्त्विकं सदाचारयुक्तं सनियमं च जीवन्ति।

अत्र स्वभावतः प्रश्नोऽयं समुदेति यदधुना ग्रहफलमिदमित्थं किमर्थं न सत्यं फलति, दिने दिने फलितशास्त्रचमत्कारो धूमिल इव जायमानः कस्माद्‌वोभूयमानोऽस्ति? यतोऽद्यतना लोकाः स्वकीये भौतिकजीवने विज्ञानसाधनान्यधिकाधिक प्रयुञ्जाना प्राकृतिकं वातावरणमणुपरमाणुपर्यन्तं दूषयन्तः स्वार्थान्धतां देहात्मवादितां भोगपरायणतां च द्रढयन्ति। एवंविधा दोषाश्च मानवजीवनेऽतीवानुचितं प्रभावं जनयन्तो दरीदृश्यन्ते। तस्मात्प्रागिव नाद्य फलादेशः सद्यश्चमत्कारं दर्शयति। येषामाहारविहारा मर्यादिताः सन्ति, ये पापात्मानः क्षुद्रधियः स्वार्थसाधनाय परपीडां जनयन्ति, ये च सर्वव्यापकस्य सर्वान्तर्यामिनः परमात्मनः परमेश्वरस्यास्तित्वेऽपि सन्दिहानाः पापाचरणान्न बिभ्यति, तादृशा नास्तिका मनोवाक्कायकर्मभिरसत्याचरणमेव हि परमं पुरुषार्थं मन्यन्ते तथाविधानां जडवादिनां कृते शास्त्रोक्ता ग्रहप्रभावनिवारणोपायाः शुभप्रभाववर्जका विधयो वापेक्षातो न्यूनामेव फलसिद्धिं दिशन्ति चेत्तन्नाश्चर्यावहमिति विरम्यते विस्तरात्।

उद्यन्तु शतमादित्या उद्यन्तु शतमिन्दवः।
न विना विदुषां वाक्यैर्नश्यत्याभ्यन्तरं तमः॥ १॥

— ० —

# नायिका-शकुन्तलाया नाट्यशास्त्रीयमध्ययनम्

□

डॉ० कुसुमभूरिया *

□

नाटकीय-पात्राणां विवेचनस्थले आचार्य-भरतेन नाट्यशास्त्रे नायिका-विवेचनमपि प्रस्तुतम्। आचार्य-भरतस्य नायिका-विवेचने स्थूल-सूक्ष्म-विचारतत्त्वयोः समन्वयो विलसति। तत्र नारीणामङ्गसौन्दर्यातिरिक्तं तासां शीलमाचरणस्य पवित्रता जीवनप्रकृतिरवस्था च विशेष-महत्त्वं भजन्ते। नाट्यशास्त्रानुसारं नायिका-विवेचने इमे विशेषा भवन्ति—

१. प्रकृतिभेद :—उत्तमा, मध्यमा, अधमा च। —(ना० शा० २५ ३७-४२)

२. आचरणस्य पवित्रतापवित्रता वा—बाह्या, आभ्यन्तरा बाह्याभ्यन्तरा च। —(ना० शा० २४·१४२-४७)

३. सामाजिकप्रतिष्ठा—दिव्या, नृपपत्नी, कुलस्त्री, गणिका च।

४. कामदशा—वासकसज्जाद्याः अष्ट। —(ना० शा० २४·२०५-२१२)

५. शीलम्—ललिता, उदात्ता, निभृता धीरा च। —(ना० शा० ३४·२४)

६. अङ्गरचना अन्तःप्रकृतिश्च-दिव्यसत्त्वादि एकविंशतिः। —(ना० शा० २४·९६-१३५)

७. अन्याधाराः—वेश्या, कुलजा, प्रेष्या च। —(ना० शा० २२·२२६)

नायिकाभेदानामुपयुक्ताधारैः सम्प्रति अभिज्ञानशाकुन्तलस्य नायिकायाः शकुन्तलायाश्चरित्र-विश्लेषणं प्रस्तूयते। कण्वाश्रमस्य कुलपति-महर्षिकण्वस्य धर्मपुत्री एषा शकुन्तलात्यन्तसरलहृदया स्नेहमयी सौन्दर्यशालिनी च कन्यास्ति। तस्याश्चरित्रं विश्वसाहित्य आदर्शनायिकाया विलसति।

१. प्रकृतिभेदः—प्रकृतिभेदस्योपयुक्त-त्रिष्वाधारेषु शकुन्तला उत्तमप्रकृतेर्नायिका विद्यते।

उत्तमप्रकृतेः परिभाषा नाट्यशास्त्रे ईदृशी विद्यते —

"या विप्रियेऽपि निष्ठुरं न वदत्यप्रियं प्रियम्।
अदीर्घरोषा च तथा कलाशिल्पविचक्षणा॥
काम्यते पुरुषैर्या तु कुलभोगधनादिकैः।
कुशला कामतन्त्रेषु दक्षिणा रूपशालिनी॥

---

* व्याख्याता—संस्कृतविभागे सागरविश्वविद्यालयस्य।

गृह्णाति कारणाद्रोषं गतेर्ष्या प्रब्रवीति च।
कार्यकालविशेषज्ञा सुभगा सा स्मृतोत्तमा ॥
—( ना० शा० २५·३७–३९ )

परिभाषानुसारमधोलिखिता गुणा विलसन्ति शकुन्तलायाम्—

क. शकुन्तलायाः हृदये स्वप्रियजनार्थमत्यधिकं प्रेम विद्यते। सा कदापि तेषां प्रति अशोभनं व्यवहारं न करोति। अनेन कारणेनैव तस्याः सख्यौ, पिता-कण्वः आर्या–गौतमी तपस्विनश्च सर्वे तस्यां स्निह्यन्ति। पंचमाङ्के दुष्यन्तेन तिरस्कृता शकुन्तला यदा शार्ङ्गरवमनुगच्छति तदा शार्ङ्गरवस्तां सक्रोधं कथयति—"किं पुरोभागे स्वातन्त्र्यमवलम्बसे" तस्मिन्नवसरेऽपि शकुन्तला किमप्यप्रियं न वदति शार्ङ्गरवम्।

ख. शकुन्तला अदीर्घरोषास्ति। दीर्घसमयं न क्रुध्यति सा। तथा च कारणविशेषे एव क्रुध्यति। पंचमाङ्के तिरस्कृता शकुन्तला क्रोधावेशे दुष्यन्तस्य भर्त्सनां करोति—"अनार्य ! आत्मनो हृदयानुमानेन पश्यसि। क इदानीमन्यो धर्मकञ्चुकप्रवेशिनः तृणच्छन्नकूपोपमस्य तवानुकृतिं प्रतिपत्स्यते ?" किन्तु पुर्नमिलने सा तमेकमपि अपशब्दं न वदति स्वानि भाग्यानि एव निन्दति—

"उत्तिष्ठत्वार्यपुत्रः। नूनं मे सुचरितप्रतिबन्धकं पुराकृतं तेषु दिवसेषु परिणाममुखमासीत्, येन सानुक्रोशोऽप्यार्यपुत्रो मयि तथा संवृत्तः।" ( सप्तमाङ्के )

ग. कलाशिल्पादिषु प्रवीणा विद्यते शकुन्तला। सा विभिन्न–कार्येभ्य उद्यानशोभां वर्धयति। पुष्पोद्गमे सा महोत्सवमायोजयति। दुष्यन्ताय प्रेमपत्रं लिखित्वा पठित्वा च सा स्वगीतकौशलमपि प्रकटीकरोति।

घ. सा स्वकुलेन ( क्षत्रिय ) सौन्दर्येण च राजर्षि–दुष्यन्तेन काम्यास्ति। दुष्यन्तशब्देष्वेव—

"अपि नाम कुलपतेरियमसवर्णक्षेत्रसम्भवा स्यात् ? अथवा कृतं सन्देहेन—

असंशयं क्षत्रपरिग्रहक्षमा यदार्यमस्यामभिलाषि मे मनः।
सतां हि सन्देहपदेषु वस्तुषु प्रमाणमन्तःकरणप्रवृत्तयः ॥" १·२०

ङ. सा दक्षिणा युवती विद्यते। आश्रमस्य जड-चेतने प्रति तस्या व्यवहारो दयार्द्रो विद्यते। एकः मृगशावकः शकुन्तलया पुत्रवद् पालितः। सर्वे पशुपक्षिणश्चतुर्थाङ्के शकुन्तलायाः प्रस्थानसमये तस्या वियोगजन्यदुःखमनुभवन्ति। यथा हि—

"उद्गलितदर्भकवला मृग्यः परित्यक्तनर्तना मयूराः।
अपसृतपाण्डुपत्रा मुञ्चन्त्यश्रूणीव लताः ॥" १·२

च. रूपशालिनी तु विद्यत एव शकुन्तला। तस्या रूपसौन्दर्येणाकृष्टो दुष्यन्तस्तां प्रति कथयति—

"सरसिजमनुविद्धं शैवलेनापि रम्यं
मलिनमपि हिमांशोर्लक्ष्म लक्ष्मीं तनोति।
इयमधिकमनोज्ञा वल्कलेनापि तन्वी
किमिव हि मधुराणां मण्डनं नाकृतीनाम् ॥" १'१८

अपि च,

मानुषीषु कथं वा स्यात्............वसुधातलात्। १'२३ चित्रे निवेश्य............वपुश्च तस्याः ॥ २'९ इत्यादि।

छ. कालस्थितिं व्यवहारमपि सा जानाति। पिता कण्वस्तामतिथिसत्कारे नियोजयति। सावधान-पूर्वकं तत् कार्यं करोति। वृक्षाणां सिंचनमपि सा उचित-समये करोति। एवं शकुन्तलोत्तम-प्रकृतेर्नायिका विद्यते।

२. आचरणस्य पवित्रतापवित्रता वा—

बाह्या चाभ्यन्तरा चैव स्याद्बाह्याभ्यन्तरा परा।
कुलीनाभ्यन्तरा ज्ञेया बाह्या वेश्यांगना स्मृता ॥
नहि राजोपचारेषु बाह्यस्त्रीभोग इष्यते।
आभ्यन्तरो भवेद्राज्ञो बाह्ये बाह्यजनस्य वा।
दिव्यवेश्यांगनानां हि राज्ञो भवति सङ्गमः ॥
—ना० शा० २४. १४३–४६.

नाट्यशास्त्रस्योपयुक्तनियमालोचनान्तरं वयं पश्यामो यत् शकुन्तला कुलीनांगनात्वात् आभ्यन्तर-कोट्यां समागच्छति।

३. सामाजिकप्रतिष्ठा—सामाजिक प्रतिष्ठादृष्ट्या शकुन्तला प्रमुख-रूपेण नृपपत्नी विद्यते, किन्तु अप्सरस उत्पत्तित्वेन तस्यां दिव्यतत्त्वमपि प्राप्यते। प्रथमाङ्के राजा दुष्यन्तस्तां प्रति कथयति—

'सर्वथाप्सरःसम्भवैषा।'

सप्तमाङ्के पुनर्मिलने सा विधिपूर्वकं नृपपत्नी स्वीकृता।

४. कामदशा—वासकसज्जाद्यष्टावस्थासु शकुन्तला तिसृष्ववस्थासु परिलक्ष्यते। सा स्वाधीन-भर्तृका-विरहोत्कण्ठिता-प्रोषितभर्तृका च विद्यते।

तृतीयाङ्के गान्धर्व-विवाह-समये सा स्वाधीनभर्तृका-नायिका विद्यते। नाट्यशास्त्रानुसारं—

"सुरतातिरसैर्बद्धो यस्याः पार्श्वगतः प्रियः ।
सामोदे गुणसंयुक्ता भवेत्स्वाधीनभर्तृका ॥' —ना० शा० २४.२०७.

विवाहस्य पश्चाद्राज्ञा सह सुप्रसन्ना रममाणा सा गर्भं दधाति ।

विरहोत्कण्ठिता—नायिकारूपेणापि सा प्रस्तुता । नाट्यशास्त्रानुसारं विरहोत्कण्ठिता-नायिकायाः लक्षणं विद्यते—

"अनेककार्यव्यासंगाद्यस्य नागच्छति प्रियः ।
तस्यानुगमदुःखार्ता विरहोत्कंठिता मता ॥"—ना० शा० २४·२०९

दुष्यन्तस्य नगरगमनमनु सा चतुर्थाङ्के ऽतीवोत्कंठिता परिलक्ष्यते । नगरं गत्वा राजकार्येषु संलग्नो दुष्यन्तस्तामानेतुं न आगच्छति, अतः स्वकार्यमपि सा विस्मरति । तदैव दुर्वासा ऋषिरागच्छति, तां बोधयति अन्ते क्रोधेन शकुन्तलां शप्त्वा निर्गच्छति, किन्तु शकुन्तला इदं सर्वं न जानाति । सा तु कुटी-समक्षं पति-चिन्तने चित्रलिखितेव तिष्ठति । प्रियंवदायाः शब्देषु—

"अनसूये पश्य तावत् । वामहस्तोपहितवदनाऽऽलिखितेव प्रियसखी । भर्तृगतया चिन्तयाऽऽत्मानमपि नैषा विभावयति किं पुनरागन्तुकम् ।" ( चतुर्थाङ्के )

पञ्चमाङ्के दुष्यन्तेन अवमानिता तिरस्कृता च शकुन्तला मारीचर्षेराश्रमे प्रोषितभर्तृकाया जीवनं व्यतियाति । भरतानुसारं—

"गुरुकार्यान्तरवशाद्यस्या विप्रोषितः प्रियः ।
सारूढालकके शान्ता भवेत्प्रोषितभर्तृका ॥" ना० शा० २४·२११

सप्तमाङ्के राजा दुष्यन्तस्तस्याः परिवेषस्य वर्णनं करोति—"अयेसेयमत्रभवती शकुन्तला । यैषा— वसने परिधूसरे वसाना नियमक्षाममुखी धृतैकवेणिः ।
अतिनिष्करुणस्य शुद्धशीला मम दीर्घं विरहव्रतं बिभर्ति ॥" ७·२१

मारीचाश्रमे पुनर्मिलनावसरे सा पुनः स्वाधीनभर्तृकानायिकारूपेण सामाजिकानानन्दयति ।

( ५ ) शीलम्—ललितोदात्तादिषु शीलस्य चतुर्षु गुणेषु शकुन्तला दिव्यत्वात् नृपपत्नीत्वाच्च उपर्युक्त-चतुर्षु गणेष्वेवान्तर्भवति । नाट्यशास्त्रानुसारं दिव्या नृपपत्नी चोपर्युक्तचतुर्षु गुणेषु समायुक्ता भवतः "धीरा च ललिता च स्यात् उदात्ता निभृता तथा ।
दिव्यानां जातयस्तैस्तैर्गुणैर्युक्ता भवन्ति हि ॥" – ना० शा० ३४·२४

( ६ ) अङ्गरचना अन्तःप्रकृतिश्च—दिव्यसत्त्वाद्यैकविंशतिभेदेषु शकुन्तला गान्धर्वकोटिं समलंकरोति । गान्धर्वशीला नारी नाट्यशास्त्रानुसारं—

"अनेकारामभोग्या च नखदन्तैः सुपुष्पितैः । स्मिताभिभाषिणी तन्वी मन्दचारा रतिप्रिया ॥
गीते वाद्ये न नृत्ते च नित्यं हृष्टा मृजावती । गान्धर्वशीला विज्ञेया स्निग्धत्वक्केशलोचना ॥"
—ना० शा० २४·१००–१०१

परिभाषानुसारं सा पुष्पितोपवनेषु प्रसन्ना भवति। स्वोपवने सा स्वहस्तेभ्यो सिंचति। पुष्पोद्गमे सा महोत्सवमपि समायोजयति। महर्षिकण्वस्तां प्रशंसन् कथयति—

"भो भोः संनिहितास्तपोवनतरवः!
पातुं न प्रथमं व्यवस्यति जलं युष्मास्वपीतेषु या
नादत्ते प्रियमण्डनापि भवतां स्नेहेन या पल्लवम्।
आद्ये वः कुसुमप्रसूतिसमये यस्या भवत्युत्सवः
सेयं याति शकुन्तला पतिगृहं सर्वैरनुज्ञायताम्॥—४·९

सा स्मिताभिभाषिण्यपि विद्यते। स्वसख्यौ प्रति सा प्रेमपूर्वकं व्यवहरति। स्वमधुरवाण्या सा सर्वान् तोषयति।

शकुन्तला सुकुमारी विद्यते। प्रथमाङ्क एव राजा तां प्रति कथयति—

"कथमियं सा कण्वदुहिता? असाधुदर्शी खलु तत्रभवान् काश्यपः, य इमामाश्रमधर्मे नियुङ्क्ते।
इदं किलाव्याजमनोहरं वपुः, तपःक्षमं साधयितुं य इच्छति।
ध्रुवं स नीलोत्पलपत्रधारया, शमीलतां छेत्तुमृषिर्व्यवस्यति॥" १·१७

अस्मिन् श्लोके तस्याः सौकुमार्यं सुस्पष्टं विद्यते।

शकुन्तला गीत-नृत्तादिष्वपि प्रवीणा विद्यते। प्रथमाङ्के वृक्षसेचनसमये तस्याः नृत्तकलायास्तृतीयाङ्के च गीतनैपुण्यस्य परिचयः प्राप्यते।

सा नित्यमेव प्रसन्ना निर्मला च विद्यते। स्वसखीभ्यां सह हासपरिहासमपि सा करोति।

स्निग्धत्वक्केशलोचनापि सास्ति। तस्या रूपसौन्दर्यं वर्णयन् राजा दुष्यन्तो वदति—"प्रियमपि तथ्यमाह शकुन्तलां प्रियंवदा। अस्याः खलु—

अधरः किसलयरागः कोमलविटपानुकारिणौ बाहू।
कुसुममिव लोभनीयं यौवनमङ्गेषु संनद्धम्॥ १·१९

इत्थं सा गान्धर्वशीला नायिका विद्यते।

(७) अन्याधाराः—आचार्यभरतो नायिकानां कामदशां वर्णयन् नायिकानां त्रीन् भेदानपि निरूपयति। तथा हि—वेश्या, कुलजा, प्रेष्या च। उपर्युक्ताष्टासु कामदशासु एतासामेव नायिकानां प्रयोगः कर्तव्य इति भरतमतम्—

"वेश्यायाः कुलजायाश्च प्रेष्यायाश्च प्रयोक्तृभिः।
एभिर्भावविशेषैस्तु कर्तव्यमभिसारणम्॥"

—ना० शा० २२·२२६

उपर्युक्ताधारेषु शकुन्तला कुलजाकोटिकी नायिका विद्यते।

———

# मुद्राराक्षसनाटके राजनीतिर्जातिविचारश्च

□

डॉ० वनेश्वरपाठकः *

□

कविविशाखदत्तकृतं मुद्राराक्षसनाम नाटकं राजनीतिकघातोपघातोपेतं जातिविचारोपहितं चेति प्रायोवादः। अस्मिन् नाटके चन्द्रगुप्त-मलयकेतु-राक्षसेतिपात्रत्रयं विजयीकृत्य राजनीतेः कूटनीतेश्च सञ्चालकश्चाणक्यः कठोरसिद्धान्तवादी विशुद्धपरिणामदर्शी च। कुटिलमतिः स सामादिनीतीनां प्रयोगे कुत्रापि नाशङ्कते, न वा दयाभावं दर्शयति। स केवलां सिद्धिं पश्यति साधनानि यथाविधानि स्युस्तत्र तस्य न कोऽप्याग्रहः।

राजनीतौ कूटनीतौ च बुद्धेर्महान् योगोऽपेक्षितः। राजनीतिज्ञः स्वविश्वासपात्रेषु मित्रेषु वशवर्त्तिष्वनुचरेषु च तथा नातिष्ठते यथा स स्वप्रखरबुद्धावास्थावान् दृश्यते। चाणक्यस्यापि तथैवास्था स्वस्यामघटितघटनाघटने पटीयस्यां बुद्धौ—

'एका केवलमर्थसाधनविधौ सेनाशतेभ्योऽधिका,
नन्दोन्मूलनदृष्टवीर्यमहिमा बुद्धिस्तु मागान्मम।' मुद्रा० १।२६)

लोकोत्तरराजनीतिज्ञः स पूर्वमेव लक्ष्यं निर्धार्य उचिते काले उचितेषु कर्तव्यस्थानेषु नीतिप्रयोगं कुरुते येन तस्याव्याहता अर्थसिद्धिर्जायते। एवंविधो नीतिप्रयोगोऽर्थसिद्धेर्मूलम्। यथाह महाकविर्भारविर्नीतिप्रयोगे सिद्धहस्तस्य राज्ञो दुर्योधनस्य सम्बन्धे—

"अनारतं तेन पदेषु लम्भिता विभज्य सम्यग् विनियोगसत्क्रियाः।
फलन्त्युपायाः परिबृंहितायतीरुपेत्य संघर्षमिवार्थसम्पदः।" (किराता० १।१५)

कार्यसिद्धावुत्साहस्य दक्षतायाश्च महदपेक्षितत्त्वं विद्यते। यथाहापरत्र भारविः—

"प्रभवः खलु कोषदण्डयोः कृतपञ्चाङ्गविनिर्णयो नयः।
स विधेयपदेषु दक्षतां नियतिं लोक इवानुरुध्यते।" (किराता० २।१२)

सहायसाधनोपाय-देशविभाग-कालविभाग-विपत्तिप्रतीकारेतिपञ्चांगोपेतस्य नयस्य सम्यग् ज्ञाता प्रयोक्ता च चाणक्य उत्साहस्य दक्षतायाश्च मूर्तिमान् विग्रह इव विराजते। फलतो राजनीतिनिपुणोऽपि राक्षसः कूटनीतिकुशलस्य चाणक्यस्य हस्तक्रीडनकमिवाभाति।

चाणक्यः प्रतिहिंसायाः प्रतिशोधस्य च महान् अवतारः। स शत्रूणामपराधान् क्षणमपि न सहते। प्रतिपक्षिणां नाम श्रुत्वैव तस्य मनः क्रोधाकुलितं भवति। किन्तु स शत्रूणां निन्दामात्रेण

* संस्कृतविभागाध्यक्षः—सेंटजेवियर्स कालेज, रांची (बिहार)।

कालक्षयं कार्यहानिम्, आत्मनः शक्तेर्ह्रासञ्च न चिकीर्षति । आधुनिकराजनीतिज्ञेष्वपि प्रतिहिंसायाः प्रतिशोधस्य च बलवती भावना दरीदृश्यते; किन्तु तेषु यथा लोकहितचिन्तामुपेक्ष्य केवला परस्पर-निन्दाकारिणी प्रवृत्तिमुंख्यायमाना विलोक्यते तथा कार्यसिद्धौ निरते नीतिनिपुणे चाणक्ये नासीत् । राजनीतिकप्रतिशोधस्य क्षेत्रे भारतन्तु किञ्चिच्छ्लाघनीयं वर्त्तते पार्श्ववर्त्तिषु ईरान-पाकस्थानप्रभृतिषु देशेषु प्रतिशोधस्य या रोमाञ्चकारिणी हिंसात्मिका लीलाऽवलोक्यते सा मानवताया इतिहासे एकः कुत्सितोऽध्यायः । चाणक्यः स्वशत्रून् प्रति अत्यन्तामुग्रतां कठोरताञ्च वर्त्तयन्नपि राक्षसस्य गुणानां प्रशंसक आसीत् । गुणग्राही स अनुपमस्वामिभक्तस्य सुदक्षस्य साहसिनश्च राक्षसस्य गुणान् हृदये-नाभिलषति स्म[1] । अत एव स राक्षसस्य संग्रहे यत्नवानासीत्—"अत एव अस्माकं त्वत्संग्रहे यत्नः ।" (मुद्रा० १।१४ तः परम्) ईर्ष्यया प्रज्वलन् राक्षसोऽपि चाणक्यं हृदयेन प्रशंसति स्म —

"आकरः सर्वशास्त्राणां रत्नानामिव सागरः ।
गुणैर्न परितुष्यामो यस्य मत्सरिणो वयम् ।।" (मुद्रा० ७।७)

कूटनीतौ, कार्यसिद्धयर्थं, शत्रोरपि प्रशंसनं श्रेयसे सम्पद्यते । गुणग्राहिणी राजनीतिरेव फलेन शोभते ।

चाणक्यः बलप्रयोगापेक्षया हृदयपरिवर्त्तनमेवाधिकं श्रेयस्करं मन्यते । अतएव स राक्षसस्य बुद्धि-बल-शक्ति स्वामिभक्तिञ्च स्वीकुर्वन् स्वप्रज्ञाबलेन तं वशीकर्तुमिच्छति न तु रक्तपाताय चेष्टते । तस्य प्रज्ञाप्रज्वलिताया राजनीतेः सकलः कार्यकलापश्चन्द्रगुप्तस्य सर्वा विरोधिनीः शक्ती राजभक्ते राष्ट्रियताया वा एकसूत्रे बद्ध्वा समस्ते भारते एकच्छत्रसाम्राज्यस्थापनायैव प्रवर्त्तते । एतादृशराज-नीतिकप्रवृत्तौ तस्य सर्जनात्मिकायाः शक्त्या विकासो जायते, यया शक्त्या स विलासिनीं नन्दशक्ति-मुन्मूलयति तथा समस्तं भारतं वर्षं राष्ट्रियताया एकस्मिन् सुदृढे सूत्रे आबध्नाति । राष्ट्रकल्याणाय सर्वात्मना समर्पितस्वात्मा चाणक्यस्त्यागस्य प्रतिमूर्तिर्गीताया अनासक्तयोगीवाभाति । राजाधि-राजमन्त्रिणस्तस्य गृहविभूतिस्तु तस्य स्वार्थत्यागस्य स्वसुखनिरीहतायाश्चानुपममुदाहरणं वर्त्तते—

"उपलशकलमेतद् भेदकं गोमयानां बटुभिरुपहृतानां बर्हिषां स्तोम एषः ।
शरणमपि समिद्भिः शुष्यमाणाभिराभिर्विनमितपटलान्तं दृश्यते जीर्णकुड्यम् ॥" (मुद्रा० ३।१५)

किमेतादृशी लोकसंग्रहभावना, एतादृशः स्वार्थत्यागः, एतादृशो स्वसुखनिरीहता, एतादृशी जनमङ्गलकारिणी राष्ट्रियता कुत्रापि राजनीतिज्ञे मन्त्रिणि वा दृष्टिपथमायाति ?

---

१. ऐश्वर्यादनपेतमीश्वरमयं लोकोऽर्थतः सेवते,
तं गच्छन्त्यनु ये विपत्तिषु पुनस्ते तत्प्रतिष्ठाशया ।
भर्तुर्ये प्रलयेऽपि पूर्वसुकृतासंगेन निःसङ्गया
भक्त्या कार्यधुरां वहन्ति कृतिनस्ते दुर्लभास्त्वादृशाः ।। (मुद्रा० १।१४)

एतादृशभावनया भावितो लोकोत्तरराजनीतिज्ञोऽपि चाणक्यः स्वव्यक्तित्वस्य स्वब्राह्मणत्वस्य च उच्चभावनायाः प्रत्याख्यानं न करोति। तस्य स्वसुखनिरीहतायामात्मविश्वासस्यात्मबलस्य च सुमहान् सन्निवेशो दृश्यते। आत्मविश्वासी निरीहश्च स राजानं तृणमिव तिरस्कारस्य विजयं मनुते—"निरीहाणामीशस्तृणमिव तिरस्कारविषयः।" (मुद्रा० ३।१६)

एतादृशो निरीहस्तथा महता आत्मविश्वासेन आत्मबलेन च संबलित एव राजनीतिनिपुणो जनः राष्ट्रस्य निर्माता तथा तस्य सत्यो हितचिन्तको भवति। चाणक्यो राष्ट्रस्य निर्माताऽस्ति किन्तु तस्य भोक्ता न। अर्थशास्त्रस्य प्राचीनकथापरम्परायाश्च चाणक्यो भवेन्नु महत्त्वाकाङ्क्षी, महाक्रोधी, महाकूटनीतिज्ञो ब्राह्मणः, किन्तु मुद्राराक्षसस्य चाणक्यः स्वसुखनिरभिलाषः, स्वार्थत्यागस्य मूर्तिः, लोकसंग्रहभावनाभावितो ब्राह्मणत्वस्यानुपमादर्शोऽस्ति।

ब्राह्मणत्वस्य प्रबलपोषकोऽपि स राजनीतौ जातिवादाय स्थानं न दत्ते। स जातेः पूजको नासीद्, शक्तेः पूजक आसीद्। तस्य नये शक्तिरेव पूज्या जातिर्या का वा भवेद्।

संस्कृतसाहित्ये सामाजिकताप्रधानेषु नाटकेषु भासकृतचारुदत्तस्य प्रथमा गणना। तत्र ब्राह्मणो जात्यैव पूज्यो वर्त्तते—"पूजनीयो मे ब्राह्मणजनः" (द्वितीयेऽङ्के वसन्तसेनाया उक्तिः। मृच्छकटिकेऽपि द्वितीयेऽङ्के वसन्तसेनायाः सैवोक्तिः। दशमेऽङ्केऽपि मृच्छकटिकस्य ब्राह्मणो जात्या अग्रगण्योऽस्ति। विदूषको धूर्तां प्रति कथयति--"समीहितसिद्धये ब्राह्मणोऽग्रतः कर्तव्यः।" किन्तु मुद्राराक्षसे चाणक्यो ब्राह्मणं जात्या पूज्यं न मन्यते, स शक्त्यैव तं पूज्यं मनुते। अत एव स राजनीतौ शासने युद्धे च प्रथितयशसं ब्राह्मणममात्यराक्षसमभिवादयते—"भो अमात्यराक्षस! विष्णुगुप्तोऽहमभिवादये", चन्द्रगुप्तेन च तमभिवादयति--"अयममात्यराक्षसः प्राप्तः। प्रणमैनम्" (मुद्रा० अङ्कः ७)।

प्राचीनकाले समाजो ब्राह्मण-क्षत्रिय-वैश्य-शूद्रेति चतुर्षु वर्गेषु विभक्त आसीत्। एतदतिरिक्तं चाण्डालाः पञ्चमे वर्गे परिगणिता आसन्। उच्चवर्गीया अस्य वर्गस्य स्पर्शमपि वर्जनीयं मन्यन्ते स्म—"विष्णुगुप्त! न मां चाण्डालस्पर्शदूषितं स्प्रष्टुमर्हसि" (मुद्रा० ७।८ तः परम्)। यद्यपि प्राचीनकाले सर्वे स्व-स्वजात्यनुसारं स्व-स्वकर्मण्यभिरता आसन्, किन्तु संस्कृतनाटकेषु एतद् बन्धनं शिथिलमिवाभाति। चारुदत्ते मृच्छकटिके च ब्राह्मणश्चारुदत्तो जीविकार्थं वैश्यकर्म वाणिज्यं कुरुते, ब्राह्मणः शर्विलकश्चौर्यं करोति, क्षत्रियः सजलकः संवाहकः संवृत्तः। तथापि दान-भोजनादौ ब्राह्मणानामेव समादर आसीत्। मुद्राराक्षसेऽपि दान-भोजनादौ ब्राह्मणानामेव समादरो दृश्यते—"आमन्त्रिता मया भगवन्तो ब्राह्मणाः।.........तद् प्रवर्त्यतां भगवतो ब्राह्मणानुद्दिश्य पाकः" (प्रथमाङ्कस्यारम्भे)। किन्तु चाणक्यो गुणवन्तं ब्राह्मणमेव श्रद्दधाति। अत एव स पर्वतेश्वरेण धारितपूर्वाण्याभरणानि ब्राह्मणेभ्यः प्रतिपादयितुमुद्यतस्य सम्राजश्चन्द्रगुप्तस्येच्छां निरुध्य ब्रूते—"गुणवन्ति भूषणानि गुणवद्भ्य एव प्रतिपादनीयानि। तदहं स्वयमेव परीक्षितगुणान् ब्राह्मणान्

प्रेषयामि" ( मुद्रा० प्रथमोऽङ्कः ) । गुणग्राही चाणक्यः स्वामिभक्तं राजनीतिज्ञं शूरं ब्राह्मणं राक्षसं संगृह्णाति, चन्द्रगुप्तस्य साचिव्यञ्च कारयति—"अत एवास्माकं त्वत्संग्रहे यत्नः, कथमसौ वृषलस्य साचिव्यग्रहणेन सानुग्रहः स्यादिति" ( मुद्रा० प्रथमोऽङ्कः ) ।

विद्वान् ब्राह्मणश्चाणक्यः सम्यग् जानाति यद् ब्राह्मणो मत्यैव शासनं कर्तुं शक्नोति न तु खड्गेन । राष्ट्रहिताय साचिव्यपदमेव योग्यं न तु राजसिंहासनारोहः । अत एव राष्ट्रनिर्माताऽपि स स्वयं चन्द्रगुप्तस्य साचिव्यं करोति ब्राह्मणेन राक्षसेनापि तस्य साचिव्यमेव कारयति । शक्तेः समादर्ता स प्रचलितप्राचीनपरम्परायाः परमो विरोधी । अत एव स विलासिनीं नन्दशक्तिमुन्मूल्य क्षत्रियस्य राज्ञः स्थाने शक्तिसम्पन्नं वृषलं चन्द्रगुप्तं स्थापयति । नन्दवंशविनाशाय स वृषलं चन्द्रगुप्तमेव साधनत्वेनाङ्गीकरोति । चन्दनदासस्य मित्रवात्सल्येन गुणेन प्रीतः स श्रेष्ठिनं चन्दनदासं पृथिव्यां सर्वनगरश्रेष्ठिपदमारोपयति । अत्रापि गुणस्यैवादरो न तु जातेः ।

मुद्राराक्षसे ब्राह्मण-क्षत्रिय-वृषल ( शूद्र )-कायस्थेतिजातिभाजः पात्रविशेषा विशेषतो विचारणीयाः सन्ति । गुणवन्तौ शक्तिसम्पन्नौ च ब्राह्मणौ चाणक्यो राक्षसश्च शासने सम्मानस्य महतीं भूमिमारोपितौ स्तः । चाणक्यश्चक्रवर्त्तिसम्राजो निर्माता बृहत्तरभारतस्योपस्थापकश्च । तस्मिन् परिग्रहग्राहिता पदलोलुपता च न दृश्येते, अतएव स सम्राजं साम्राज्यञ्च तृणमिव तिरस्कारयोग्यं मन्यते । एतादृशो ब्राह्मण एव राष्ट्रनिर्माणं तथा राष्ट्रं राष्ट्रियैकतायाः सूत्रे आबद्धं कर्तुं समर्थः । एतादृशं ब्राह्मणमेवाभिलक्ष्य श्रीजयशंकरप्रसादेन स्वीये चन्द्रगुप्ताख्ये नाटके चाणक्यस्य विषये प्रोक्तम्—"ब्राह्मण न किसी के राज्य में रहता है, न किसी के अन्न से पलता है । वह ऋत से जीता है और अमृत पीता है ।"

राष्ट्रियैकतायाः स्थापनाय राष्ट्रे समस्तविरोधिशक्तीनामेकसूत्रे आबन्धनमावश्यकम्, न तु तासां तिरस्कारो बहिष्कारो बलाद् दमनं वा । अत एव स विरोधिनं राक्षसं, यस्य चिन्तया सोऽहर्निशं जागर्ति आयासितमतिश्चास्ते—"गुरुभिः कल्पनाक्लेशैर्दीर्घजागरहेतुभिः चिरमायासिता सेना वृषलस्य मतिश्च मे" ( मुद्रा० ७।८ ), स्वनीतिनैपुण्येन विद्यावैभवेन च वशीकृत्य आत्मनः प्रधानमन्त्रित्वं तस्मै समर्पयति । किं राष्ट्रहितकामनया एतादृशो महान् स्वार्थत्यागः कुत्रापि मन्त्रिणि प्रधानमन्त्रिणि वा दृष्टिपथमायाति ? अधुना तु सर्वे येन केनाप्युपायेन स्वं पदमेवाभिरक्षितुं दृढयत्नाः सन्ति । राष्ट्रचिन्तया कः खिद्यते ?

शक्तिहीनो गुणवतां ब्राह्मणानामवमन्ता विलासी क्षत्रियो राजा राजसिंहासनाच्च्यावयितुं योग्यः । शक्तिसम्पन्नः वृषलोऽपि तत्स्थाने स्थापयितुमर्हः इति चाणक्यस्य नीतिर्जनतन्त्रशासनस्य सर्वथाऽनुकूला ।

वृषलो यद्यपि समाजस्य चतुर्थे वर्गे स्थितः । वृषं धर्मं लुनाति छिनत्तीति वृषलः ( वृष + लू

( लूञ् छेदने ) + 'अन्येभ्योऽपि दृश्यते' इति उः ) इति व्युत्पत्त्या, "नाज्ञातेन समं गच्छेन्नैको न वृषलैः सह" इति मनूक्त्या ( ४।१४० ) "वृषो हि भगवान् धर्मस्तस्य यः कुरुते ह्यलम्। वृषलं तं विदुर्देवास्तस्माद् धर्मं न लोपयेत्" इति मनूक्त्या ( ८।१६ ) च वृषलः अपशूद्रः अधार्मिकः। किन्तु सोऽपि शक्तौ क्षत्रियमतिशय्य वर्त्तते चेत् राजसिंहासनस्याधिकारीति चाणक्यस्य नीतिः श्लाघनीया। अधुनापि भारतीयशासने एतादृशी सर्वसमन्वयकारिणी उदारा नीतिरनुस्रियते।

बुद्धिजीवी कायस्थः मुख्यतया लिपिकवृत्तिं विदधाति स्म। कायेषु सर्वभूतशरीरेषु अन्तर्यामितया, काये ब्रह्मकाये वा तिष्ठतीति कायस्थः ( काय + स्था + क ) इति व्युत्पत्त्या, "क्षणं ध्यानस्थितस्यास्य सर्वकायाद् विनिर्गतः। दिव्यरूपः पुमान् हस्ते मसीपात्रं च लेखनी। चित्रगुप्त इति ख्यातो धर्मराजसमीपतः। प्राणिनां सदसत्कर्मलेखाय स निरूपितः। ब्रह्मणातीन्द्रियज्ञानी देवाग्न्योर्यज्ञभुक् स वै। भोजनाच्च सदा तस्मादाहुतिर्दीयते द्विजैः। ब्राह्मकायोद्भवो यस्मात् कायस्थो वर्ण उच्यते। नानागोत्राश्च तद्वंश्याः कायस्था भुवि सन्ति वै"॥ इति पद्मपुराणोक्त्या ( सृष्टिखण्डे ) च कायस्थः जातिविशेषः, कूटकृत, पञ्जीकरणः, करणः, पञ्जिकारकः। संस्कृतनाटकेषु कायस्थः न्यायाधिकरणे सम्भवतः प्रस्तुतिकार ( पेशकार इति भाषायाम् )—पदे नियुक्तः कूटकर्मकृत् पुरुषः। कायस्थस्य कूटकर्मणः सर्वे बिभ्यति स्म। अधिकरणे कुटिलसर्पस्येव कायस्थस्य स्थानमासीत्—

"चिन्तासक्तनिमग्नमन्त्रिसलिलं दूतोर्मिशंखाकुलं
पर्यन्तस्थितचारनक्रमकरं नागाश्वहिंस्राश्रयम्।
नानावाशककङ्कपक्षिरुचिरं कायस्थसर्पास्पदं
नीतिक्षुण्णतटञ्च राजकरणं हिंस्रैः समुद्रायते।" (मृच्छ. अ० ९)

भारतीयसमाजे बुद्धिजीविन्यौ द्वे जाती—ब्राह्मणः कायस्थश्च। प्राचीनकाले ब्राह्मणस्येव कायस्थस्यापि समाजे सम्माननीयं स्थानमासीदित्युपर्युक्तपद्मपुराणोक्त्या स्पष्टं प्रतिभाति। कालान्तरे बुद्धिजीविन्योरनयोर्जात्योः परस्परं संघर्षः समजनि। न्यायाधिकरणेषु नियुक्तेषु कायस्थेषु राजनीतिकं कौटिल्यञ्च समायातम्। उपर्युद्धृता मुद्राराक्षसस्य पंक्तिः 'कायस्थसर्पास्पदा' एतस्य परिचायिका। फलतः समाजे तेषां तत् सम्माननीयं स्थानं विनष्टम्। अत एव मुद्राराक्षसे कुटिलमतिश्चाणक्यः कूटकृतं कायस्थं शकटदासमुद्दिश्य कथयति—"कायस्थ इति लघ्वी मात्रा" ( A Kayastha is a small matter ) अर्थात् कायस्थः किमप्यस्मदनिष्टं कर्तुं न समर्थः। ( मुद्रा० प्रथमोऽङ्कः )

यद्यपि कायस्थः ब्राह्मण इव बुद्धिजीवी आसीत्, किन्तु न्यायाधिकरणे अन्यस्मिन् राजकर्मणि वा नियुक्तः स वेतनभोगी आसीत्। तस्मिन् तेजस्विव्यक्तित्वस्याभाव आसीत्। कुटिलमतिके

तस्मिन् ब्राह्मणचाणक्य इवात्मबलमात्मविश्वास आत्मशक्तिश्च नासीत् । अत एव सेवां श्ववृत्तिं[1] मन्यमान्यस्य चाणक्यस्य दृष्टौ कायस्थः लघ्वी मात्रा (शक्तिहीनः) आसीत्, तथा च स शक्तिपूजकस्य चाणक्यस्य श्रद्धायाः पात्रं नासीत् ।

सारांशोऽयं यत् समस्तं मुद्राराक्षसनाटकमालोचयद्भिरस्माभिरेतद् विनिश्चेतुं शक्यते यत् मुद्राराक्षसे राजनीतिको जातिविचारोऽधुनातनसंकीर्णजातिवाद इव कटुतामापन्नो न वर्त्तते । राजनीतौ शासने च ब्राह्मणो जात्या न अपि तु शक्त्या सम्माननीयः । त्यागी, ज्ञानधनी, सत्त्वसम्पन्नः, सोत्साहो ब्राह्मण एव राष्ट्रं निर्मातुं राष्ट्रे राष्ट्रियैकतां सम्पादयितुं सफलसाचिव्यञ्च कर्तुं क्षमः । शक्तिहीनः क्षत्रियो राजा शासनस्याधिकारी न, अपि तु शक्तिसम्पन्नो वृषलोऽपि राष्ट्रस्य शासनं विस्तारं प्रतिरक्षां च कर्तुं क्षमः । बुद्धिवैभवसम्पन्नोऽपि अल्पप्राणो जनः शासनं कर्तुमक्षमः । अतः राजनीतौ शासने च शक्तिरेव पूज्या, गुणा एव ग्राह्याः, न तु जातिः । राष्ट्रश्रीः शक्तिवश्या गुणगृह्या च भवति । इयमेव नीतिरखण्डराष्ट्रियताया राष्ट्रियशक्तिसम्पदश्च मूलमित्यलम् ।

---

१—'सेवा लाघवकारिणी कृतधियः स्थाने श्ववृत्तिं विदुः ।' (मुद्रा० ३।१४ कञ्चुकिन उक्तिः)

———

# वाक्यप्रदीपः

□

डॉ० शिवशंकरोऽवस्थी *

□

भूतिराजतनयेन श्रीमता हेलाराजेन महावैयाकरणेन वाक्यप्रदीपस्य काण्डत्रये स्वकीयं व्याख्यानं विहितमासीदिति निश्चप्रचम् । तृतीयकाण्डस्य प्रारम्भेऽसौ कथयति—

काण्डद्वये यथावृत्ति सिद्धान्तार्थसतत्त्वतः । प्रबन्धो विहितोऽस्माभिरागमार्थानुसारिभिः ॥ २ ॥

तच्छेषभूते काण्डेऽस्मिन् सप्रपञ्चे स्वरूपतः । श्लोकार्थद्योतनपरः प्रकाशोऽयं विधीयते ॥ ३ ॥

भगवद्भर्तृहरिविरचितवृत्त्यनुसारं काण्डद्वयं व्याख्याय स्वरूपतः विस्तृतेऽस्मिन् प[1]दकाण्डे तृतीये श्लोकार्थप्रकाशिका प्रकाशाख्या टीका मया क्रियत इति । तत्र प्रथमकाण्डस्य टीकाया अभिधा 'शब्दप्रभा' इत्यासीत् । द्वितीयकाण्डस्य 'वाक्यप्रदीप' इति, तृतीयकाण्डस्य 'पदप्रकाश' इति प्रकीर्णकप्रकाश इति वा । शब्दप्रभेति प्रकीर्णप्रकाश इति प्रथिते नामनी । वाक्यप्रदीपं न कोऽपि जानातीति तदर्थमयमारम्भः । वाक्यप्रदीपे काण्डत्रयं वर्तते शब्दकाण्डं (ब्रह्मकाण्डं), वाक्यकाण्डं, पदकाण्डं चेति ।

यत्तु गणरत्नमहोदधिकृता वर्धमानसूरिणोक्तम् —"भर्तृहरिर्वाक्यपदीयप्रकीर्णयोः कर्ता महाभाष्यत्रिपाद्या व्याख्याता च इति तत्तमते तथाप्रचारस्य बाहुल्यात् तथोक्तिरिति ध्येयम् । वस्तुतस्तु वाक्यपदीयं काण्डत्रयात्मकमेवेति वर्धमानसूरिपूर्ववर्तिना हेलाराजेन तथोक्तत्वात् । तथाहि—

त्रैलोक्यगामिनी येन त्रिकाण्डी त्रिपदी कृता । तस्मै समस्तविद्याश्रीकान्ताय हरये नमः ॥ (पदकाण्डान्ते)

तत्रभवान् भर्तृहरिरप्याह-—

"वर्त्मनामत्र केषाञ्चिद्वस्तुमात्रमुदाहृतम् । काण्डे तृतीये न्यक्षेण[2] भविष्यति विचारणा ॥"

(वाक्यकाण्डान्ते)

---

* उपाचार्यः—संस्कृतविभागे गोरखपुर विश्वविद्यालयस्य ।

१. पदकाण्डेऽपि भगवद्भर्तृहरिकृता वृत्तिरासीदिति द्वितीयकाण्डस्यप्रस्तुतवृत्तितो ज्ञायते — "कालस्यैव चोपाधिविशिष्टस्य परिमाणत्वात् कुतोऽस्यापरं परिमाणमित्येतत्कालसमुद्देशे व्याख्यास्यते ।" । काण्ड २ कारिका २४

२. प्रथमकाण्डस्य तृतीयकारिकाया वृत्तौ भगवान् भर्तृहरिः 'न्यक्षेण' इति शब्दं प्रयुङ्क्ते—"जातिसमुद्देशे तु सत्ताविभागे न्यक्षेण भावविकारा वक्ष्यन्ते ।" अत्र श्रीवृषभाचार्यः "न्यक्षेण इति । आभिमुख्येन कार्त्स्न्येन वा ।"—पद्धतौ ।

पुण्यराजा वार्योऽप्येतद्व्याख्याने—"अत्रास्मिन् वाक्यकाण्डे काण्डद्वये वा केषाञ्चिदेव न्याय-वर्त्मनां वस्तुमात्रं बीजमात्रं प्रदर्शितमिव । शिष्टे तु तृतीयेऽस्य ग्रन्थस्य पदकाण्डे काण्डद्वयनिष्यन्दभूते न्यक्षेणादरविशेषेण स्वसिद्धान्तापरसिद्धान्तवर्तिनां विचारणा युक्तायुक्तविचारपूर्वकनिर्णीतिर्भविष्यति । ततो नायमेतावान् व्याकरणागमसंग्रह इति ॥" इत्यवोचत् ।

तत्र प्रथमकाण्डे श्रीमता हेलाराजेन शब्दप्रभाख्या टीका रचितेत्यत्र प्रमाणबाहुल्यम् । यथा—

"क्रमाख्या हि कालशक्तिः ब्राह्मणो जन्मवत्सु पदार्थेषु जन्मादिक्रियाद्वारकमेव पौर्वापर्येणा-भासोपगमविधायिनी नापरो द्रव्यभूतः काल इति—अध्याहितकलां यस्य कालशक्तिमुपाश्रिताः । जन्मादयो विकाराः षड् भावभेदस्य योनयः ॥ इत्यत्र शब्दप्रभायां निर्णीतोऽयमर्थः ।"—( जाति-समुद्देशस्य ३७ तमकारिकायाम् )

"विस्तरेणागमप्रामाण्यं वाक्यपदीयेऽस्माभिः प्रथमकाण्डे शब्दप्रभायां निर्णीतमिति तत एवावधार्यम् ।"

द्रव्यसमुद्देशस्य पञ्चदशतमकारिकाया हेलाराजीये व्याख्याने लिखितमिदं वर्तते "विशेष-श्चानयोः वाक्यप्रदीपेऽस्माभिर्व्याख्यात इति तत एवावधार्यम् ।" अत्रत्यः 'वाक्यप्रदीप' इति पाठे, ए. बी. एल. इत्याख्ये पुस्तकत्रये विद्यत इति अय्यरमहाभागैः स्वसम्पादिते वाक्यपदीय-तृतीयकाण्डे पादटिप्पणीषु सङ्केतितम् । किञ्च मूले 'वाक्यप्रदीप' इत्यस्य स्थाने 'वाक्यपदीये' इत्येव पाठस्तैः स्वीकृतः । सोऽयमसङ्गतः पाठः । वाक्यपदीयं तु न हेलाराजीयं व्याख्यानमपि तु वाक्यप्रदीपाख्यैव व्याख्या तस्य । अत एवास्माभिरिति कथनं सङ्गच्छते । एषा व्याख्या वाक्यकाण्डस्यैव भवितुमर्हति । किञ्च यत्र यत्रास्माभिरिति शब्दस्य प्रयोगस्तत्र तत्र सर्वत्र 'वाक्यपदीय' इत्यस्य स्थाने वाक्यप्रदीप इति पाठः सुवचः । यथा—"तथा ह्युक्तं वाक्यपदीयेऽस्माभिः ।"—कालसमु०, ६२ कारिकायाम् "एतच्च वाक्यपदीये विस्तरेणास्माभिर्निर्णीतम् ।"—कालसमु० ७० कारिकायाम् । नहि वाक्य-पदीयं हेलाराजकृतिरत उपर्युक्तोदाहरणद्वये वाक्यप्रदीप इत्येव पाठः सुसङ्गतः । लिपिकरप्रमादा-द्वाक्यपदीय इति पाठः प्रचलित इत्यनुसंदध्महे ।

हेलाराजः सर्वत्र स्वकीयरचनास्वेवास्माभिर्निर्णीतं, प्रपञ्चितमित्यादिशब्दान् प्रयुनक्ति । तथाहि—"अत एव सैव प्राधान्याद्धात्वर्थो वैयाकरणानामिति क्रियाविवेकेऽस्माभिः प्रपञ्चितं तत एवावधार्यम् ।" ( क्रियासमुद्देशे ४० तमकारिकायाम् ) "सिद्धान्तस्तु यथाभाष्यं गुणावस्थारूपं लिङ्गमित्यस्माभिर्वार्तिकोन्मेषे यथागमं व्याख्यातं तत एवावधार्यम् ।" ( लिङ्गसमुद्देशे ३१ तमका-

ए.—बनारससंस्कृतपुस्तकमालायां प्रकाशितम् ।

बी.—अड्यारपुस्तकालयस्थं हस्तलिखितं पुस्तकम् । सं०—५५४.

एल.—ट्रावङ्कोरविश्वविद्यालयहस्तलिखित-पुस्तकालयस्य पुस्तकम् । सं०—२४१.

रिकायाम् ) केवलमत्र "कारणान्तरव्युदासद्वाद्वयसिद्धावभिहित इति सत्यर्थित्वे तत एवावगन्तव्यः ।" — अस्मशब्दप्रयोगो नास्ति । किन्तु 'अभिहित' इत्यस्य स्थाने 'विवृत' इति पाठान्तरदर्शनादनुमातुं शक्यते यदद्वयसिद्धिस्तस्यैव कृतिरिति ।

वाक्यपदीयशब्दस्य प्रयोगं तु हेलाराजः प्रथमस्य ब्रह्मकाण्स्य विशेशरूपेणैव करोति । यथा— "अक्रमा हि पश्यन्तीरूपा संवित् प्राणवृत्तिमुपारूढा कालात्मना परिगृहीतक्रमेव चकास्ति इति कृतनिर्णयं वाक्यपदीये शब्दप्रभायामस्माभिस्तत एवावगमनीयम् ।"–(कालसमु० ६२ तम का०) येषु सन्दर्भेषु एकल एव प्रयोगः वाक्यपदीयशब्दस्य हेलाराजः करोति तत्र वाक्यपदोयशब्दस्य स्थाने 'वाक्यप्रदीप' एव पठनीयः । यथात्र—"तेन चोद्बोधितशब्दभावनः प्रवर्तत इति निर्णीतं वाक्यपदीये ।"

—सम्बन्धसमु० ३२ तमकारिकायाम्

इह 'वाक्यपदीय' इत्यस्य स्थाने वाक्यप्रदीप इति पाठात् ज्ञायते यद् वाक्यकाण्डस्य टीकायां वाक्यप्रदीपाख्यायां 'अनागमश्च सोभ्यासः समयः कैश्चिदिष्यते । अनन्तरमिदं कार्यमस्मादित्युपदर्शनम् ॥ ( ११८ । वाक्यकाण्डे )—इति कारिकाव्याख्यानसन्दर्भे हेलाराजेन विषय एषः वितत्य संदृब्धः । इह सम्बन्धसमुद्देशे तु —"अनादिशब्दभावनानुविद्धं हि तिरश्चामपि ज्ञानम् ।""श्रोतापि स्ववासनाविकासानुसारेण प्रतिपद्यते समाविष्टशब्दभावनः । तेन चोद्बोधितशब्दभावनः प्रवर्तत इति निर्णीतं वाक्यप्रदीपे ।" वाक्यकाण्डस्योक्तकारिकाव्याख्याने पुण्यराज आह—"स चाभ्यासोऽनागमः इदानीन्तनो न भवति । नहि बालस्य तदैवोपदिष्टं केनचिदिति जन्मान्तरभावी एव स च सम इष्यते । संकेतस्वरूपोऽसाविष्यत इति स्वरूपमेवास्य स्फुटयितुमाह 'अनन्तरमिदमित्यादि । यथाय कशाभिघातमात्रसमनन्तरमेव वाजिनोऽतियान्ति, अङ्कुशाभिघातेन च राजा, एवमन्येऽपि यथास्वं प्राणिनोऽनादिवासनाभ्यासवशेन प्रतिभातः समुचितव्यवहारं कुर्वन्तो लोकयात्रां निर्वहियन्तीति स्थितम् ।"

अपि च कालसमुद्देशस्य सप्ततितमकारिकाव्याख्याने हेलाराज आह—"एतच्च वाक्यपदीये विस्तरेणास्माभिर्निर्णीतम् ।" अत्रापि वाक्यपदीयस्य स्थाने वाक्यप्रदीप इति भवितुं युक्तः । द्वितीयकाण्डस्य २२,२३,२४ तमकारिकाव्याख्यायां वाक्यप्रदीपाख्यायामेष विषयः विस्तरेणोक्तो भवेत्। कालसमुद्देशस्य १०५ तमकारिकाव्याख्यानेऽपि हेलाराजः कथयति—"पुरुषधर्मेष्वपि हि शास्त्रमधिकृतमिति विचारितं वाक्यपदीये ।"

एष विषयः ब्रह्मकाण्डे न कुत्रापि विचारितः । वाक्यकाण्डस्य वाक्यप्रदीपटीकायां विचारित- इति मन्ये । अतः उक्तोदाहरणे 'वाक्यपदीये' इत्यस्य स्थाने वाक्यप्रदीप इत्युचितम् । हेलाराजोऽसकृदुदाहरणेषु ब्रह्मकाण्डं वाक्यकाण्डं च नामग्राहं जग्राह । यथा—

१. "तदेवं यदुक्तं वाक्यकाण्डे—

'यश्च जातिसमुद्देशे प्रतिनिधिं प्रति अपरो दर्शनभेदः ।' —जातिसमु० पञ्चमकारि०

इदं यश्चेत्युदाहरणं वाक्यकाण्डस्थाया भर्तृहरेर्भगवतो वृत्तेरुपगृहीतमिति प्रतिभाति।

२. "अवेदलपदप्रयोगो द्योतक इति निर्णीतं वाक्यकाण्डे।"— वृत्तिसमुद्देशे १९१ कारिकायाम्।

३. "तथा च विद्याविद्याप्रविभागमप्रविभागं ब्रह्मेति ब्रह्मकाण्ड उक्तम्।"—सम्बन्धस० ६२।

४. "सा च विद्यातत्त्वान्यत्वाभ्यामनिर्वाच्येति ब्रह्मकाण्डे निर्णीतम्।"––सम्बन्धस० ६८।

५. "तत्र च स्वरूपस्य वाच्यता प्रथमकाण्ड एव निर्णीता, इह तु सम्बन्धसमुद्देशेऽपि निर्णेष्यते।"—जातिस०, कारि० ६।

६. "तस्माद्धि ते शक्ती पृथक् क्रियेते इत्युपपादितं प्रथमकाण्डे।"—साधनस० ५३।

एतैरुदाहरणैरिदमवगन्तुं शक्यते यन्महावैयाकरणो हेलाराजः काण्डत्रयीं वाक्यपदीयनाम्ना जानाति स्म। तेन प्रथमकाण्डे शब्दप्रभा, द्वितीयकाण्डे वाक्यप्रदीपः, तृतीयकाण्डे पदप्रकाश इति नामत्रय्या टीकां निर्मिमाय। भ्रमवशादेव लिपिकरैस्तत्र तत्र वाक्यप्रदीपस्य स्थाने वाक्यपदीयेति पदं स्थापितमिति सुधियो विभावयन्तु॥

---

## निवेदना

सहृदयाः पाठका ग्राहकाश्चापि निवेद्यन्ते यदपरिहार्यकारणेनैतत्पत्रिकायाश्चतुर्थवर्षीययोर्द्वितीयतृतीयाङ्कयोः प्रकाशने विलम्बोजातः। अतस्तावङ्कौ सम्मेल्य चतुर्थवर्षीयश्चरमोऽङ्कः प्रकाश्यतेऽयम्। पत्रिकापरिवारो ग्राहकैः पाठकैश्चापि क्षन्तव्य इति।

––व्यवस्थापकस्य

# काव्येषु नाटकं रम्यम्

□

प्रो० श्रीरञ्जनसूरिदेवः *

□

'काव्येषु नाटकं रम्यम्'— सूक्तिरियं महाकवेः कालिदासस्य प्रसिद्धतरमभिज्ञानशाकुन्तल-
नाटकं लक्ष्यीकृत्य प्रचारितास्ति। पूर्णः सूक्तिश्लोकस्तु एवंविधोऽस्ति—काव्येषु नाटकं रम्यं तत्र
रम्या शकुन्तला। तत्रापि च चतुर्थोऽङ्कस्तत्र श्लोकचतुष्टयम् ॥

ज्ञातव्यमिदं यद् काव्यं द्विविधं भवति— श्रव्यकाव्यं दृश्यकाव्यञ्च। श्रव्यकाव्येषु रघुवंश-
कुमारसम्भव-कादम्बर्यादिप्रसिद्धानां काव्यानां परिगणना भवति। दृश्यकाव्यं तावन्नाटका-
परपर्यायभूतम्। अतएव दृश्यश्रव्यकाव्येषु श्रव्यकाव्यभूतस्य नाटकस्य रमणीयता सर्वोपरि वरीवर्त्ति।
रमणीयेषु तु नाटकेषु सप्ताङ्कात्मकस्याभिज्ञानशाकुन्तलनाटकस्य सर्वाधिकं चारुतरत्वं स्वीक्रियते।
तत्रापि चतुर्थोऽङ्को रमणीयतायां सर्वातिशायी वर्त्तते, अथ च तस्मिन् चतुर्थेऽङ्केऽपि यथासमावेशि-
तेषु श्लोकेषु 'यास्यत्यद्य शकुन्तलेति' प्रभृतयश्चत्वारः श्लोकाः सातिशयमनोज्ञा इति नाटकसमीक्ष-
काणां मतम्। अत्र हि काव्येषु नाटकं रम्यमिति विषयमाश्रित्य विवेचनं प्रासङ्गिकमस्ति।

जैनशास्त्रानुसारं द्वासप्ततिकलासु, ब्राह्मणमतानुसारञ्च चतुःषष्टिकलासु ललितकलाया
मूर्द्धन्यं महत्त्वम्। काव्यं, सङ्गीतं, नृत्यं, नाटकञ्च ललितकलायाः प्रमुखानि मोदावहाङ्गानि सन्ति।
आचार्यकल्पैः काव्यरसवादिभिर्विवेचकप्रवरैर्मन्यते यन्नाटकं काव्यस्योत्कृष्टतमं रूपम्। भारतीय-
धारणानुसारं यथा हि चित्रकला मूर्त्तिकला च स्थापत्यस्याङ्गीभूते कले स्तः, तथैव नृत्यकला
संगीतकला च नाट्यकलायाः सहयोगिन्यौ वर्तेते। विभिन्नाः कलाकृतयः जीवनस्य यान् स्थिति-
वैविध्यान् मूल्यांश्च अभिव्यञ्जयन्ति, नाटकेषु तेषां प्रदर्शनं ततोऽधिकसाफल्येन भवति। नाटकस्या-
स्वादो नेत्रेण कर्णेन च परिगृह्यते, अथ च अनयोरिन्द्रिययोरेव कृते नाटकं प्रचुररुचिकरं भवति;
यतो हि रसानुभूत्यै इमे द्वे इन्द्रिये एव सर्वाधिके समुपयुक्ते स्तः।

वेदो हि नाटकस्यादिस्रोत इति नाट्याचार्येण भरतमुनिना स्वकीये नाट्यशास्त्रे स्पष्टीकृत-
तमुक्तञ्च यन्नाटकं पञ्चमो वेद इति। नाटकस्य वेदमूलत्वविषये नाट्यशास्त्रे दरीदृश्यते खल्वेकः
श्लोकः—जग्राह पाठ्यमृग्वेदात् सामभ्यो गीत एव च। यजुर्वेदादभिनयान् रसानाथर्वणादपि ॥

ब्रह्मा हि ऋग्वेदात्पाठ्यमथवा संवादं, सामवेदात्संगीतं, यजुर्वेदादभिनयमथर्ववेदाच्च

---

* सम्पादक :—परिषत्पत्रिकायाः ( त्रैमासिक्याः ) बिहार राष्ट्रभाषापरिषद्, पटना-४।

रसतत्त्वं 'समाहृत्य पञ्चमं नाट्यवेदं निर्मितवान् । ऋग्वेदे हि एतादृशानि सूक्तानि समुपलभ्यन्ते येषु खलु संवादः कथोपकथनं वा विद्यते । अस्ति चेदं बहुप्रचलितं मतं यदेतानि संवादसूक्तानि सर्वाधिकप्राचीनरचनापद्धतिरूपेण लिखितानि । अतश्चैवैतानि सूक्तानि' परवर्तिनाट्यकृतीनां रचनाधारभूतानि । संवादसूक्तेषु उर्वशी-पुरूरवः-सूक्तं यमयमीसूक्तञ्च सर्वाधिकं प्रसिद्धम् । कालिदासस्य विक्रमोर्वशीये नाटके ह्यस्य संवादस्यैव विकासः पूर्णनाटकीयरूपेण परिदृश्यते । अग्निपुराणेऽपि नाटकनिरूपणप्रकरणे नाटकस्य भेदोपभेदाः समुल्लिखिताः सन्ति । विश्वनाथमहापात्ररचितस्य साहित्यदर्पणस्य षष्ठे परिच्छेदे नाटकविषयकं विवेचनं बहुलांशतोऽग्निपुराणस्यैव नाटकनिरूपणप्रकरणाधृतमस्ति । अग्निदेवेन खलु नाटकं धर्मार्थकामभूतस्य त्रिवर्गस्य साधनरूपेणांगीकृतम् । यथा चोक्तम्—'त्रिवर्गसाधनं नाट्यम् ।' जैनानां द्वादशांगेषु तृतीयस्य स्थानाङ्गस्य चतुर्थे स्थाने नाट्याभिनययोर्विवरणस्य समुल्लेखोऽस्ति ।

काव्येनाथवा नाट्येन सह संगीतस्य रसघनिष्ठः सम्बन्धः । भारतीये कलाचिन्तनशास्त्रे नृत्यकलाया अन्तर्भूतस्याभिनयस्याथवा नाट्यस्य सातिशयगर्भो विश्लेषणं सम्प्राप्यते । नृत्यवाद्यसंगीताभिनयसंवलितत्वमेव नाटकस्य रमणीयः पक्षः प्राचीनभारतीयनाटकेषु पाश्चात्यनाटक इव वध-युद्धमरणादीनां प्रदर्शनं वर्जितमस्ति । साहित्याचार्येण विश्वनाथमहापात्रेणापि वध-युद्ध-राज्यविप्लवमृत्युप्रभृतीनां दृश्यानां प्रदर्शनस्य निषेधः कृतः । अतएव शास्त्रीयभाषायां दुःखान्तनाटकस्य यादृशोऽर्थस्तस्यानुरूपस्य कस्यापि नाटकस्यास्तित्वं प्राच्यभाषासु विशेषतया संस्कृतभाषायां नास्ति । अतश्चैव सर्वविधेषु काव्येषु नाटकस्य सर्वाङ्गतया सुखावहत्वात्तस्य रम्यत्वं स्वीक्रियते ।

भरताचार्येणोक्तं यन्नाट्ये गीतवाद्ययोः समायोगान्न कदापि तस्य विनाशो भवति । अर्थान्नाटकस्य शश्वत्प्रतिष्ठायै तस्मिन् गीतवाद्ययोः समन्वयोऽनिवार्यः । वाद्यं तु नाट्यस्य शय्येति भरतेनोद्घोषितम् । भरतानुसारेणैव नाटकस्था नर्त्तक्यः चतुरा नाट्यकुशला ऊहापोहविचक्षणा रूपयौवनसम्पन्नाश्च भवन्ति स्म । अतो हि नेत्रकर्णयोर्युगपत्प्रियत्वात् हृदयावर्जकत्वाच्च नाटकस्य रमणीयता सर्वस्वीकृतास्ति । नाट्यं खलु स्वकीयरमणीयताभूयिष्ठगुणेन भिन्नरुचेर्जनस्य युगपदेव समाराधनाय समर्थम् । अतएव मालविकाग्निमित्रनाटके कालिदासेनोक्तम्—'नाट्यं भिन्नरुचेर्जनस्य बहुधाप्येकं समाराधनम् ।'

प्रसिद्धरसवादिनोऽभिनवगुप्तस्य मतेन रसनिष्पत्तेश्चतस्रः स्थितयो वर्त्तन्ते । प्रथमस्थितौ नाटके हि रङ्गमञ्चोपरि दर्शकः खलु व्यक्तिविशेषं पश्यति । स्थितिरियं स्थूला प्रत्यक्षीभूता च । द्वितीयस्थितौ दर्शकस्य कृते व्यक्तिविशेषबोधस्य समाप्तिर्जायते, परं द्वैतत्वं तिष्ठत्येव । तृतीयस्थितौ विभावादेर्विशेषत्वलोपेन सहैव सहृदयहृदये वासनारूपेण स्थितस्य स्थायिभावस्य साधारण्येन समुद्बोधनं जायते, अथ च चतुर्थस्थितौ तु विगतविघ्नाः सहृदयास्तत्स्थायिभावं रसरूपेणास्वादयन्ति । अभिनवगुप्तो हि प्रक्रियामिमां नाटकं लक्ष्मीकृत्यैवावितनोत् । अथ चाभिज्ञानशाकुन्तलस्य श्लोक-

विशेषमावृत्याभिनवगुप्ताचार्येण रसास्वादनप्रक्रियाया यादृशी व्याख्या कृता, सा खलु श्रव्यकाव्यमथवा नाटकमेवाश्रियते । श्लोकविशेषस्त्वेवम्—

रम्याणि वीक्ष्य मधुरांश्च निशम्य शब्दान् पर्युत्सुकीभवति यत्सुखितोऽपि जन्तुः ।
तच्चेतसा स्मरति नूनमबोधपूर्वं भावस्थिराणि जननान्तरसौहृदानि ॥

श्लोकस्यास्य तात्पर्यः खल्वयमस्ति यत् रम्याणि वस्तूनि दृष्ट्वा तथा च मधुरान् शब्दान् श्रुत्वा दर्शकहृदये वासनारूपेण स्थितः स्थायिभावो हि समुद्बोधनं प्राप्य तन्मन आनन्दयति । नूनमेवाभिनवगुप्तेनैषा रसास्वादनप्रक्रिया नाटकं मनसि निधायैव प्रतिपादिता विश्लेषणेनानेन खलु नाटकस्य भृशमापातरमणीयता संसूच्यते ।

नाटकस्य रम्यत्वे तस्य विनोदजनकत्वञ्चापि कारणवैशिष्ट्यमस्ति । नाट्यवेदस्य सृष्टिप्रयोजनं विनोदाय तु भवत्येव, हितोपदेशाय दुःखश्रमशोकाविष्टानां प्राणिनां विश्रामाय चाप्युपयोगिभूतम् । भारतीयनाटके मङ्गलभावनाया बाहुल्यं वर्णितमस्ति । सत्त्वोद्रेक एव भारतीयनाटकानामुद्देश्यभूतः । सत्त्वोद्रेकात्समुत्पन्नस्य चरमाह्लादस्य रसनीयत्वं कदाप्यशिवं न स्यात् । यतो हि रसभावः सर्वथैव माङ्गलिकः, अतो हि नाटकस्य वर्ण्यविषयोऽपि मांगलिक एव भवेत् । नाटके समुपस्थापितानामुदात्तचरित्राणां मोहकाभिनयमाध्यमेनाभिव्यक्तं जीवनदर्शनं, तेषां नाटकीयं गीतिमयं माधुर्यं, प्रकृतेर्विशाला पटभूमिः, रसनैरन्तर्यभावाश्च प्रवाहमयी सप्राणा व्यञ्जनाशक्तिरित्यादयो हि नाटकस्य रमणीयत्वं चारुत्वञ्च भूरिशो विवर्द्धयन्ति ।

संस्कृतनाटके तु भारतीयाचारस्य सञ्जीवनी सञ्चरति । तस्मिन्हि धर्माध्यात्मयोर्विनिवेशोऽस्ति, नैतिकताया आशावादितायाश्च सन्देशो विद्यते । किम्बहुना, तस्मिन्नन्तर्निहिता विजयोद्घोषस्य पराशान्तेश्च स्वरवैखरी निरन्तरं मुखरिता भूत्वा सहृदयहृदयान्समुल्लासयति लोकजीवनञ्च प्रसादयति । संस्कृते हि रमणीयनाटकरचनाया दीर्घतरा परम्परा वरीवर्ति । नाटककारेषु हि भास-कालिदास-भवभूति-शूद्रक-विशाखदत्तमुरारि-जयदेव-कृष्णमिश्रराजशेखरादयो हि मौलिभूताः सन्ति । एते सर्वे हि सौन्दर्यरसिका नाट्यशास्त्रिण आसन् । तैर्हि स्वकीयनाटकेषु रम्यत्वं प्रतिष्ठापितं यतश्च ते रमणीयतागुणस्य सम्यग्ज्ञातारः सुप्रयोक्तारश्चासन् । लोकजीवनस्य रम्यतापादकत्वादेव संस्कृतनाटकानां रमणीयत्वम् । अतएव 'काव्येषु नाटकं रम्यम्'—सूक्तिरियं सर्वथान्वर्थीभूतेति ।

———

# कवीनां कमलप्रीतिः

□

श्रीहरिअरविन्दः *

□

हरेर्जातं विधेस्तातं वनमालीविलोचनम् ।
इन्दिरामन्दिरं काम-कार्मुकं जलजं भजे ॥

हिरण्यगर्भः समवर्तताग्रे, भूतस्य जातः पतिरेक आसीत् । स दाधार पृथिवीं द्यामुतेमाम् । भगवान्नारायणः शेषविष्टरे शयान आसीत् । स एकाकी न व्यरमत । सोऽकामयत–एकोऽहं बहुस्यामिति । यावदेव तन्मनसि सिसृक्षा समुद्भूता तावदेव तन्नाभेः कमलमेकं प्रादुर्बभूव । अङ्कुरणसमकालमेव प्रवृद्धं तत्तामरसं प्रफुल्लतां भेजे । विकासक्षण एव तस्माद् विधिरुद्बभूव । चतुर्दिक्षु दिदृक्षोस्तस्य निसर्गत एव चत्वारि मुखानि सञ्जातानि । तदाप्रभृति स चतुराननः स्वयम्भूः कमलोद्भव इति विख्यातः । अब्जयोनिः स चिन्तयाञ्चकार यत्—'कुत इदं कमलम् ? कथमिदं सर्वत्र जलमेव जलमेव ? कुतोऽहम् ? अहमेकाकी किं कुर्याम् ?' इत्यादि । तदा 'तप जपे' ति विष्णोर्वचनमाकर्ण्य स शब्दागमनस्थलं प्रतिलक्ष्य कमलनालमाश्रित्य जलं प्रविवेश । तत्र शेषशायिनं नारायणं दृष्ट्वा तदादेशात् संसृतिचक्रं सञ्चालयितुं भूयोऽप्यम्भोरुहकर्णिकामारुरोह । तस्मिन्नेव कमले स्थितः स भुवनानि ससर्ज । अतः कमलासन इत्यभिधानं प्राप । इत्यादिपौराणिकीं कथामनुसृत्य ज्ञायते यदिदं सम्पूर्णमपि संसारं कमलनाभेः कमलोद्भवाद्वा समुत्पन्नमस्ति । "कविर्मनीषी परिभूः स्वयम्भूः" —कवीनामादिकविः, आदिकवीनामपि पुराणकविर्भगवान् विष्णुः कमलं प्रति तादृशीं प्रीतिं करोति, ब्रह्मा कमलादेव जायते चेत्तन्निर्मिताः प्रजाः कमले सुहृत्त्वमादधते –किमत्र चित्रम् ?

कमलं नाम कुसुमं सर्वेषां वृन्दारकाणां विद्याधराणां नराणां वा समानं प्रीतिभाजनं चेद् भ्रमरादयस्तिर्यग्योनयोऽपि तत्र मुह्यन्ति —"दारुभेदनिपुणोऽपि षडङ्घ्रिर्निष्क्रियो भवति पङ्कजकोशे ।" नारायणो नाभौ हस्ते च नलिनं दधाति । हरिप्रिया पद्मा तु पद्मालयैव, सा द्वाभ्यामेव हस्ताभ्यां पद्मं गृह्णाति । रमाकुमारस्य सर्वोत्कृष्टमायुधं सरोजम् —"अरविन्दमशोकं च चूतं च नवमल्लिका ।
नीलोत्पलं च पञ्चैते पञ्चबाणस्य सायकाः ।"

'श्लोकत्वमापद्यत यस्य शोकः'—आदिकविर्वाल्मीकिरेव प्रारभत प्रथमं कमलविषयिणीमुपमां दातुम्–"प्रविश्य तु महारण्यं रामो राजीवलोचनः । विराधं राक्षसं हत्वा शरभङ्गं ददर्श ह ।"

---

* प्राचार्यः–श्रीरमाशङ्करसाङ्गवेदविद्यापीठस्य, कोडरा, चन्दहर, बस्ती ।

इति रामायणस्य बालकाण्डे प्रथमसर्गस्यैकचत्वारिंशत्तमे श्लोके राजीवप्रयोगमारभ्य बहुषु स्थलेषु भूरिशः प्रयुयोज । सुन्दरकाण्डस्थपद्ये मनोरमैका उपमा दृश्यते—

"तस्याः शुभं वामकरालपक्ष्मराजीवृतं कृष्णविशालशुक्लम् ।
प्रस्पन्दतैकं नयनं सुकेश्या मीनाहतं पद्ममिवाऽभिताम्रम् ॥" रा० सु० २९--२

'कवीति च ततो व्यासे'—अचतुर्वदनो ब्रह्मा, द्विबाहुरपरो हरिः, अभाललोचनः शम्भुर्भगवान् बादरायणः कृष्णद्वैपायनो व्यासो वाल्मीकेः पश्चाद्द्वितीयो महाकविर्बभूव । स हि भगवान् वेदान् सौकर्यार्थं चतुर्धा विभज्य वेदमतं परिपोषयितुं पुराणान्युपपुराणानि रचयाञ्चकार । पुराणेषु मुकुटायितं श्रीमद्भागवतं महापुराणं विदुषामपि परीक्षणनिकषत्वं भजते—'विद्यावतां भागवते परीक्षा ।' तत्र बहुषु विविधप्रकारैरुपमादानैर्वर्णनैश्च कमलसौन्दर्यं प्रकाश्यते शुकतातेन । दशमस्कन्धे भगवतः श्रीकृष्णस्य जन्मसमये कमलानां श्रीवृद्धया ह्रदानां सौन्दर्यं द्विगुणं सञ्जातम्—"नद्यः प्रसन्नसलिलाः ह्रदा जलरुहश्रियः" ( भा० १०।३।३ ) । कारागारकक्षान्तरालमुद्भासयन्, मातापित्रोः शोकसागरमुपशोषयन्, रक्षकसमूहान् विमोहयन्, पृथिवीं पावयन्, भूभारमवतारयन् भगवान् श्रीकृष्णचन्द्रो यदा स्वसम्मुखमद्भुतबालकरूपेणाऽविर्भवति तदा वसुदेवः पश्यति यत्तस्य चत्वारः करा उद्यतचतुरायुधाः सन्ति—

"तमद्भुतं बालकमम्बुजेक्षणं चतुर्भुजं शङ्खगदार्युदायुधम्" । ( भा० १०।३।९ )

अत्र शङ्खगदादिशब्देषु 'अरि' शब्दो द्वावर्थौ प्रकाशयति—अरिः = चक्रं सुदर्शनम्, अरिः = कमलमिति च । एवमेव सौन्दर्यसारस्य रसपारावारपुरुषोत्तमस्य भगवतो लीलामनुगायन् बादरायणः "अम्बुजाक्ष ! पुण्डरीकाक्ष !" इत्यादिशब्दैः सम्बोधयन् नारायणचरणारविन्दं करसरोरुहं मुखाम्बुजं नाभिनलिनं चासकृद्वर्णयति । भगवतो नगर्यां भगवल्लीलादर्शनलालसो देवर्षिर्नारदो यदा प्रविशति तदा पश्यति—

'उत्फुल्लेन्दीवराम्भोजकह्लारकुमुदोत्पलैः । छुरितेषु तरस्सूच्चैः कूजितां हंससारसैः॥' भा० १०।६९।४

यत्र यत्र भगवतः करचरणानन-नयनादीनां वर्णनं चिकीर्षति तत्र तत्र प्रायः सर्वेषु स्थलेष्वेव अम्भोजसरोरुहाम्बुजपद्मारविन्दपङ्केरुहादिपदानाश्लिष्य लिखति द्वैपायनः । तथैव ह्रदजलाशयदीर्घिकाणां शोभावर्णनप्रसङ्गे कमलकुमुदकह्लारमृणालादीनां समुल्लेखमपि नैव त्यजति । इत्थमेव हि सर्वेष्वपि पुराणेषु स पङ्कजायापि कमलाय सुरुचिमावहन् स्थानं दत्ते ।

महाकवेर्भासस्य प्रसिद्धेषु नाटकेषु 'स्वप्नवासवदत्तम्' प्राथम्यं भजते । अत्र नाटके केवलं द्वयोः स्थलयोः कमलप्रसङ्ग आयाति । प्रथमेऽङ्के सूत्रधारो यन्मङ्गलाचरणं करोति वस्तुनिर्देशात्मकश्लोकरूपं तत्र—"बलरामस्य पद्मावतीर्णपूर्णौ वसन्तकम्रौ भुजौ पाताम्" इति कथयन् बलस्य भुजौ कमलतुल्यकोमलौ प्रसन्नताप्रदातारौ स्त इति प्रतिपादयति । यद्यपि अन्यत्रासौ महाकविर्महाराजस्योदयनस्य वासवदत्तायाः पद्मावत्या वा करचरणनेत्रादीनां वर्णने कमलाद्युपमानाना-

मुल्लेखं न कुरुते । अन्यैः कविभिरिव क्रीडोद्यानाऽऽरामवनादिस्थलेष्वपि दीर्घिकाकमलादिकं वर्णितवान् तथापि पञ्चमेऽङ्के राजा वासवदत्तां विचिन्तयन् शोकाकुलो वक्ति—

"लावाणके हुतवहेन हृताङ्गयष्टिं तां पद्मिनीं हिमहतामिव चिन्तयामि ॥" स्व० वा० ५।१

अत्र 'तुषारपातेन विनष्टायाः पद्मिन्या उपमाभूतां तां वासवदत्तां चिन्तयामि या लावणकग्रामेऽग्निना दग्धशरीराऽभूत्' इति वर्णयन् कविः कमलं धन्यं विधत्ते – क्व ज(ड)लजं ? क्व च सचेतनो मनुष्यः ?

कमलस्य बहवो भेदा भवन्ति–रक्तकमलं नीलकमलं नलिनी कुमुदिनी कुमुदमित्यादि । अजरामरा धन्यधन्याः समे कवयो बहुविधानि कमलकुमुदादीनि बहुषु स्थलेषु बहुविधोपमानदानप्रसङ्गे समभिगृह्णन्ति । प्रायशः कवीनां वर्ण्यविषयत्वं जलजमेव कमलं भजते, परन्तु स्थलकमलानामपि नैव वर्णनं मिलतीति न । भारविकालिदासादयः स्थलकमलिनीमपि निजलेखनीचञ्चलचञ्चुतलखेलनसौभाग्यभगिनीं व्याचचक्षिरे । पुराणकविः पराशरसूनुर्महाभारते भीमसेनं कुबेरनगरीं प्रापयति सुवर्णकमलान्यानेतुं द्रौपदीमनोविनोदनपरायणम् । तत्रैवान्याऽपि कथाऽऽयाति सुयोधनपत्नी शङ्करं स्वर्णकमलानां सहस्रेण पूजयति स्म । कविकुलचूडामणिः कालिदासोऽपि मेघदूते यक्षमुखेन अलकापुर्यां हैमकमलानां प्राचुर्यं सूचयति—

"वापी चास्मिन्मरकतशिलाबद्धसोपानमार्गा । हैमैश्छन्ना विकचकमलैः स्निग्धवैदूर्यनालैः ॥"
उत्तरमेघः १३

भगवान्नारायणः सकललोकपालनपरायणः सर्वेश्वरः सन्नपि अशेषजगन्मङ्गलायतनं पञ्चाननं प्रलयङ्करमपि लोकशङ्करं महेश्वरं सहस्रकमलैः समर्चयन् यदैकदा नवनवत्युत्तरनवशतमेव कमलानि लब्धवान्, तदैकं कमलं स्वकीयविलोचनमेवामन्यत --

"हरिस्ते साहस्रं कमलबलिमाधाय पदयोर्यदेकोनं तस्मिन्निजमुदहरन्नेत्रकमलम् ।" (महिम्नस्तोत्र)

अत एव श्रीविष्णोः पुण्डरीकाक्षत्वं सार्थकतामावहति । शिशुपालवधमहाकाव्यप्रणेता महाकविर्माघश्च प्रथमसर्गे नारददर्शनप्रसङ्गे प्रफुल्लतां प्राप्तयोर्वासुदेवलोचनयोः साभिप्रायत्वं स्फुटीकरोति—

"विलोचने बिभ्रदधिश्रितश्रिणी स पुण्डरीकाक्ष इति स्फुटोऽभवत् ।"

महाकविकालिदासः स्वेषु काव्येषु काटकेषु चात्यधिकं कमलं वर्णयति । कवीनां कुलगुरुरसौ यावन्मात्रं कमलान्युपमितिषूपयुङ्क्ते तावत्तु सम्भवतः कोपि द्वितीयः कविर्नोपयुयोज । आलोकयामस्तावत्तस्य काव्येषु कमलानामुपयोगं समासेन । विद्योत्तमावदननिर्गत'अस्ति'शब्दोद्भवस्य कुमारसम्भवमहाकाव्यस्य प्रथमे सर्गे हिमालयवर्णनावसरे तदुच्छ्रितत्वं वर्णयन् कविः सूर्यमपि हिमाचलनितम्बतलचारिणं निर्वक्ति । तत्रत्याग्रसरःसु स्थितानि कमलानि सप्तर्षिभिरवचीयन्ते सूर्यस्योर्ध्वमुखकिरणैश्च प्रबोध्यन्ते —

"सप्तर्षिहस्तावचितावशेषाण्यधो विवस्वान्परिवर्तमानः ।
पद्मानि यस्याग्रसरोरुहाणि प्रबोधयत्यूर्ध्वमुखैर्मयूखैः ॥"

तारकासुरपरिपीडिता इन्द्रादिवृन्दारका बृहस्पतिं पुरोधाय धाम स्वायम्भुवं ययुः । तत्र देवैः प्रार्थितो भगवान्ब्रह्मा तथा प्रादुर्बभूव यथा सरसां मुकुलितानां कमलानां पुरतः सूर्यः समुदेति —

तासामाविरभूद्ब्रह्मा परिम्लानमुखश्रियाम् । सरसां सुप्तपद्मानां प्रातर्दीधितिमानिव ॥

(कुमार० २ सर्गः)

कीदृशी मनोहारिणी चात्रोपमितिः ? मृणालसूत्रं तु सूक्ष्मतरं लौकिकव्यवहारानुपयोगि च भवति, तथापि अलौकिकानन्दप्रदायिनि रसाभिष्यन्दसमास्वादनानुभवदानमानिनि अलौकिक-वस्तुनि काव्ये समुचितोपयोगित्वेनोपन्यस्तं कविना तदपि—

"अन्योन्यमुत्पीडयदुत्पलाक्ष्याः स्तनद्वयं पाण्डु तथा प्रवृद्धम् ।
मध्ये यथा श्याममुखस्य तस्य मृणालसूत्रान्तरमप्यलभ्यम् ॥" (कुमार० १ सर्गः)

भगवान् शंकरः समाधिमङ्गीकरोति । स निस्पन्दः सुस्थिरपूर्वकायः ऋज्वायतः सन्नमितो-भयांसः पर्यङ्कबन्धो यदा तिष्ठति पद्मासने तदा स कविना प्रफुल्लकमलेनोपमीयते—"उत्तानपाणि-द्वयसन्निवेशात्प्रफुल्लराजीवमिवाङ्कमध्ये" (कुमार० ३ सर्गः)।

मेघदूते पश्यामः—रात्रौ खण्डितानां योषितां नयनसलिलं प्रणयिभिः प्रातःकाले शान्ति नेयम्, तत्रान्यो न मध्ये निवारयेदिति वाक्यमुदाहरणमुखेन परिपोषयति महाकविः—"नलिन्या कमलवदनात्प्रालेयास्रं हर्तुं प्रत्यावृत्तो भानुः कररुधि त्वयि अनल्पाभ्यसूयो भविष्यती" ति । अलका-पुरसुन्दरीणां शृङ्गारं पुष्पैरेव सम्पादयति कविस्तत्रापि प्रथमं कमलमेवोपन्यस्तम्—"हस्ते लीला-कमलमलके बालकुन्दानुविद्धं नीता लोध्रप्रसवरजसा पाण्डुतामानने श्रीः ॥" उत्तरमेघः २

यथा प्रोषितपतिका नारी सौन्दर्यविहीना भवति, मालिन्यमावहति, म्लानमुखी संतिष्ठते, तथैव सूर्यस्यानुपस्थितौ कमलिनी सौन्दर्यविकला जायते—"सूर्यापाये न खलु कमलं पुष्यति स्वाम-भिख्याम्" (उत्तरमेघः १७)। पद्मिनी तु पद्माक्षकरस्पर्शेनैव प्रफुल्लतां प्राप्नोति । मेघच्छन्ने नभोमण्डले सा निराशा न च बद्धाशा सती अर्द्धविकसितगतिं प्रयाति—"साभ्रेऽह्नीव स्थलकमलिनीं न प्रबुद्धां न सुप्ताम्" (उ० मे० २७)। 'आयास्यति नायास्यति वा प्रियो मे' इति विचिन्तयन्ती प्रोषितपतिका योषिदपि कदाचित्पूर्वकृतप्रेमव्यापारान् स्मृत्वा किञ्चित्प्रसीदति कदाचित्तदागमनसमय-बिलम्बत्वमसहमाना सती विषीदतीत्यहो कवेरुपमादानचातुर्यम् । एवमेव रघुवंशमहाकाव्ये "तिरश्चकार भ्रमराभिलीनयोः सुजातयोः पङ्कजकोशयोः श्रियम्" (३ सर्गः) इति सुदक्षिणा-स्तनवर्णनावसरे, इन्दुमतो स्वयंवरावसरे च बहूनि पद्यानि कमलोपमानालङ्कृतानि द्रष्टुं शक्यन्ते—

"समीरणोत्थेव तरङ्गलेखा पद्मान्तरं मानसराजहंसीम्" (६।२६)

"बबन्ध सा नोत्तमसौकुमार्यां कुमुद्वती भानुमतीव भावम्" ( ६।३६ )

"शरत्प्रमृष्टाम्बुधरोपरोधः शशीव पर्याप्तकलो नलिन्या" ( ६।४४ )

"स्वसुर्विदर्भाधिपतेस्तदीयो लेभेऽन्तरं चेतसि नोपदेशः ।
दिवाकरादर्शनबद्धकोशे नक्षत्रनाथांशुरिवारविन्दे ॥" ( ६।६९ )

इत्यादि कियन्ति पद्यान्युदाहरामः—"सरसिजमनुविद्धं शैवलेनापि रम्यम्" (अभि० शा०) इत्यभिदधता कविना पदे पदे व्याख्यातमस्ति सरोजसौन्दर्यंसौकुमार्यम् ।

यथा कालिदासो रघुवंशीये सप्तमसर्गे—"विलोलनेत्रभ्रमरैर्गवाक्षाः सहस्रपत्राभरणा इवासन्" इत्युल्लिलेख, तथैव भावसाम्यमनुगृह्णता महाकविनाऽश्वघोषेणापि बुद्धचरितमहाकाव्ये लिखितम्—"वातायनेभ्यस्तु विनिःसृतानि परस्परायासितकुण्डलानि । स्त्रीणां विरेजुर्मुखपङ्कजानि सक्तानि हर्म्येष्विव पङ्कजानि ॥" (३।१९)

संक्षेपादेव पश्यामोऽन्येषामपि कवीनां कृतिषु । अद्वैतसिद्धान्तप्रतिपादको जगद्गुरुः शङ्कराचार्यः स्वरचनासु—"दृशा द्राघीयस्या दरदलितनीलोत्पलरुचा दवीयांसं दीनं स्नपय कृपया मामपि शिवे !" "मृणालीमृद्वीनां तव भुजलतानां चतसृणाम्" ( सौन्दर्यलहरी ) इत्यादि नैकविधस्थलेषु कमलान्युदाजहार । नाट्यजगति कविकुलगुरुप्रतिस्पर्धी श्रीकण्ठपदलाञ्छनो महाकविर्भवभूतिरेकत्र प्रकृतेः कठोरतररूपाणि चित्रयति चेदन्यत्र कोमलतममपि चित्रं नैव विस्मरति । सूक्ष्मातिसूक्ष्म-भावचित्रणपटुरयं कविकुञ्जरः किमिति कविसमयं विस्मरेत् ? अत्रोदाहरणार्थमस्य द्वावेव श्लोकौ पर्याप्तौ—

"व्यतिषजति पदार्थानान्तरः कोऽपि हेतुर्न खलु बहिरुपाधीन्प्रीतयः संश्रयन्ते ।
विकसति हि पतङ्गस्योदये पुण्डरीकं द्रवति च हिमरश्मावुद्गते चन्द्रकान्तः ॥"
( उत्तररामचरितम् ६।१२ )

"वपुरवियुतसिद्धा एव लक्ष्मीविलासाः प्रतिकलकमनीयां कान्तिमुद्भेदयन्ति ।
अमलिनमिव चन्द्रं रश्मयः स्वे यथा वा विकसितमरविन्दं बिन्दवो माकरन्दाः ॥"
( उ० रा० च० ६।२४ )

बभूव गुर्जरराज्ये महिलापत्तनस्थाने पुरा वीरसिंहो नाम राजा । तस्यासीत् पुत्री शशिकला-नाम्नी । तस्य राज्ञः सभायां 'विह्लणा'भिधेयः सकलशास्त्रविगाहनपटुर्महाकविर्विराजते स्म । भूपतिस्तं कविवरं स्वदुहितुरध्यापकं नियुयोज । शशिकला जवनिकान्तरिता शास्त्राणि पठति स्म । जवनिकाबहिर्देशस्थो विद्वान् विह्लणमहाभागस्तां पाठयति स्म । याते काले तस्याः कन्यायाः शास्त्र-ग्रहणवैचक्षण्यमनिन्द्यलावण्यं च ज्ञात्वा तस्यां सञ्जातरतिर्मनीषी स पटान्तःस्थितां तामभिलक्ष्य श्लोकार्द्धमेकं पपाठ—

"जातं सुजन्म विफलं भुवने नलिन्या दृष्टं यया न विमलं तुहिनांशुबिम्बम् ।"

एतच्छ्रुत्वा शशिकलापि सद्यः पद्यबन्धलक्षणविलक्षणं श्लोकार्द्धं कविगुणचरितविमुग्धतया समुदाजहार—

"सम्पूर्णतापि शशिनश्च हि निष्फलैव दृष्टा यया न नलिनी परिपूर्णरूपा ।।"

तदनु परस्परमुत्कण्ठितयोस्तयोरन्तरालाज्जवनिका सत्वरमपसृता । पश्चात् प्राप्तकठोरराजदण्डः स जीवनान्तेऽपि पञ्चाशिकारचनापूर्वकं प्रेम्णः प्रकर्षं प्रदर्शयन् प्रयातः । स हि विक्रमाङ्कदेवचरितमहाकाव्यस्य प्रथमे सर्गे मङ्गलमाचरन् पुण्डरीकनीलोत्पलयोः सुन्दरं चित्रमुपस्थापयति—

"श्रीधाम्नि दुग्धोदधिपुण्डरीके यश्चञ्चरीकद्युतिमातनोति ।
नीलोत्पलश्यामलदेहकान्तिः स वोऽस्तु भूत्यै भगवान्मुकुन्दः ।।" ( १।२ )

आयाति चैको महाकविः स्थलकमलिनीपरागविनिर्मितं छत्रं गृहीत्वा नभोमण्डलं साहित्याकाशमिवोद्भासयन् भारविनामा । अनेके कवयः कमलिनीं स्थलकमलिनीं च वर्णयामासुः, परन्तु भारवेर्महाकवेः कमलिनोवर्णना नान्योच्छिष्टत्वावच्छिन्ना जृम्भते । एतस्मादेव कारणादयं कवीशः 'आतपत्रभारवि' रिति ख्यातिं गतः । आस्वादयामस्तावत्स्थलकमलिनीवर्णनरसम्—

"उत्फुल्लस्थलनलिनीवनादमुष्मादुद्धूतः सरसिजसम्भवः परागः ।
वात्याभिर्वियति विवर्तितः समन्तादाधत्ते कनकमयातपत्रलक्ष्मीम् ।।"

( किरातार्जुनीयम् ५।३९ )

इन्द्रकीलपर्वतं प्रति गच्छन्नर्जुनो मार्गे यक्षाधिपदर्शिताश्शोभाः पश्यन् स्फुटं तुतोष । क्षेत्रेषु कलमाः परिणामरमणीयाः स्वर्णवर्णा लसन्ति । मृणालिनीनां त्विषा कमलपलाशशोभया शालिशिखाभिश्चानुरञ्जितं जलं पुरन्दरधनुष्खण्डं सुशोभितमिव राजते । तत्रत्यमेव पश्यामः शोभनमेकं प्रसङ्गम्—

"असावनास्थापरयाऽवधीरितः सरोरुहिण्या शिरसा नमन्नपि ।
उपैतो शुष्यन्कलमः सहाम्भसा मनोभुवा तप्त इवाभिपाण्डुताम् ।।" ( ४ सर्गः )

अत्र शालिसरोरुहिण्योर्वर्णनेन कविर्नायकनायिकयोर्भावं प्रकटीकरोति ।

भक्तिसाहित्येऽपि विलक्षणाः कवयः सुन्दर-सुन्दरमाध्यमेन कमलिनीकुमुदिनी-मृणालिनीनामुपमादानैर्भक्तिरसं पुष्णन्ति । महामाहेश्वरः कवितिलको जगद्धरभट्टः स्तुतिकुसुमाञ्जलिनामके स्वकीये शिवस्तुतिकाव्ये लिखति—

"युष्माकमस्तु नवनीलसरोजदामश्यामद्युतिः सुमतये शितिकण्ठकण्ठः ।।"

"फुल्लारविन्दमकरन्दघृतप्रसङ्ग-भृङ्गाङ्गनागुमगुमारवगीतिगर्भम् ।
गायन्ति यस्य चरितं हरितामधीशा धीशालिनः कमलिनीपुलिनस्थलीषु ।।"

एवं हि शान्तरसधाराभिराप्लावितमानसं जनं ये कुर्वन्ति संसारचक्रपराङ्मुखवृत्तयो योगीश्वरा महात्मानस्तेऽपि कमलकोमलतां त्यक्तुं नापारयन् । ते निजवाचोयुक्तीः कमलसौरभ्य-

सुरभिताः कृत्वा लोकमुपदिशन्ति—

"भोगा मेघवितानमध्यविलसत्सौदामिनीचञ्चला
आयुर्वायुविघट्टिताब्जपटलीलीनाम्बुवद्भङ्गुरम् ।" ( वैराग्यशतकम् )

विलक्षणभक्तिरसपरिप्लुतहृदयो बिल्वमङ्गलाभिधानो भक्तप्रवरः श्रीकृष्णनयननलिनयोः सन्दर्शनाभिलाषी सन्ततमेवं समुत्कण्ठते—

"लीलायताभ्यां रसशीतलाभ्यां नीलारुणाभ्यां नयनाम्बुजाभ्याम् ।
आलोकयेदद्भुतविभ्रमाभ्यां काले कदा कारुणिकः किशोरः ॥
( श्रीकृष्णकर्णामृतम् )

शृङ्गारतिलकशृङ्गारशतककाराभ्यां कालिदासामरुकाभ्यां स्वस्वरचनयोः कमलाय विशिष्टं स्थानं वितरितम्—कालिदासस्य नायकः कथयति—

"ये ये खञ्जनमेकमेव कमले पश्यन्ति दैवात्क्वचि-
त्ते सर्वे कवयो भवन्ति सुतरां प्रख्यातपृथ्वीभुजः ।
त्वद्वक्त्राम्बुजनेत्रखञ्जनयुगं पश्यन्ति ये ये जना-
स्ते ते मन्मथबाणजालविकला मुग्धं किमित्यद्भुतम् ?" इति

चेदमरुकस्य नायिका प्रवासात्प्राप्तस्य प्रियस्य स्वागतं स्वैरङ्गकुसुमादिभिरेव करोति—

"दीर्घा वन्दनमालिका विरचिता दृष्ट्यैव नेन्दीवरैः,
पुष्पाणां प्रकरः स्मितेन रचितो नो कुन्दजात्यादिभिः ।
दत्तः स्वेदमुचा पयोधरयुगे नार्घ्यो न कुम्भाम्भसा,
स्वैरेवावयवैः प्रियस्य विशतस्तन्व्या कृतं मङ्गलम् ॥"

'सुखात्तु यो याति नरो दरिद्रतां धृतः शरीरेण मृतः स जीवति' ( मृच्छकटिकम् ) इति सुक्ति-सार्थकतामापन्नः पण्डितराजो जगन्नाथः स्वकीयदशायाः स्वरूपं रूपकेणाभिव्यनक्ति—

"येनामन्दमरन्दे दलदरविन्दे दिनान्यनायिषत । कुटजे खलु तेनेहा तेने हा ! मधुकरेण कथम् ? ॥"

करुणरसनिर्वचनप्रक्रियायां भामिनीविलासे प्रेयसीमभिलक्ष्य नायकेन कृतानि संस्मरणपरि-देवितानि मनो हरन्ति—'या मञ्जुलमयी गृहदेवता मां नित्यं विकसितनेत्ररूपैर्नीलकमलै रचयति स्म साऽद्य सुरसुन्दरीसहचरी जाता, अतः सरोरुहाणां चिन्ता शशाम सकलाऽपि' । 'मन्दहास्य-विलसितं सुन्दरीमुखमवलोक्य भ्रमराः कमलधिया नन्दन्ति, तदेव मुखं चन्द्रमसं बुद्ध्वा चकोरा-श्चञ्चूपुटं चटुलयन्ति' सुमनोहरमेकं दृश्यं पश्यामो जगन्नाथचित्रितम्—

"तीरे तरुण्या वदनं सहासं नीरे सरोजं च मिलद्विकासम् ।
आलोक्य धावत्युभयत्र मुग्धा मरन्दलुब्धालिकिशोरमाला ॥"

विलक्षणकाव्यरचनाचातुर्यसम्पन्नोऽन्यो महाकविरायाति संस्कृतसाहित्ये । स तु लोकविख्यातारं

धातारमपि कमलकोशसम्बद्धं विदधाति—"तत्सङ्कुचन्नाभिसरोजपीताद् धातुर्विलज्जं रमते रमा-याम्" ( नैषधीयचरितम् ३ सर्गः । अत्युदारवर्णनाशाली नैषधचरितकारः श्रीहर्षः । तन्मते पुण्यश्लोकस्य राज्ञो नलस्य करयोश्छायालवोऽपि पल्लवे नास्ति । नलचरणौ कमलातिशायिनौ सन्तौ कमलेषु घृणां दधतः—"अधारि पद्मेषु तदङ्घ्रिणा घृणा क्व तच्छयच्छायलवोऽपि पल्लवे ।" राज्ञा नलेन प्रेषितसन्देशं प्रापयितुं हिरण्मयो हंसो विदर्भनगरीं प्राप्नोति । वैदर्भीकेलिकानने स दमयन्तीं मिलति । तस्यै निजपचरिचयं ददाति हंसः—'भगवतो ब्रह्मणो यानभूतस्य हंसस्य वंशे समुत्पन्नाः स्मो वयम् । अस्मादृशां चाटुवचनं श्रोतुं सर्वे नाधिकारिणो भवन्ति ! स्वर्गङ्गासमुत्पन्न-सुवर्णमृणालिनीनां नालामृणालाग्रभागान् भक्षयामः । तस्याद्वयं स्वर्णवर्णाः स्मः—

"सहस्रपत्त्रासनपत्रहंसवंशस्य पत्राणि पतत्त्रिणः स्मः ।
अस्मादृशां चाटुरसामृतानि स्वर्लोकलोकेतरदुर्लभानि ॥
स्वर्गापगाहेममृणाळिनीनां नालामृणालाग्रभुजो भजामः ।
अन्नानुरूपां तनुरूपऋद्धिं कार्यं निदानाद्धि गुणानधीते ॥"

गुणिजना अवाञ्छितप्रत्युपकाराः सर्वभूतहिते रता भवन्ति । ते सुखेषु दुःखेषु चाश्रितं जनं न परित्यजन्ति । परन्तु ये धनिनो जनास्ते तु कृतपरोपकारं सन्तमपि जनं तथैवावमन्यन्ते यथा पादतल-गता दूर्वाङ्कुरा जनैरवहेल्यन्ते । अस्मिन् विषये कस्यापि सूक्तिरियमवश्यं दर्शनीया—

"आजन्मानुगतेऽप्यस्मिन्नाले विमुखमम्बुजम् । प्रायेण गुणपूर्णेषु रीतिर्लक्ष्मीवतामियम् ॥"
( सुभाषितरत्नभाण्डागारम् )

गम्भीरधीरकविताविन्ध्याटवीचातुरीसञ्चारी कविकुम्भिकुम्भभिदुरपञ्चाननो महाकवि-र्बाणभट्टः संस्कृतसाहित्यजगति महदुत्कृष्टं स्थानमादत्ते । 'बाणोच्छिष्टं जगत्सर्वम्' इत्येतावतैव ज्ञातुं शक्यतेऽस्याप्रतिहता प्रतिभा कादम्बरीपर्यालोचनेन वा । कविकेसरीशोऽसौ चण्डीशतकस्तोत्रे भवान्याश्चरणकमलं वर्णयति—

"जङ्घाकाण्डोरुनालो नखकिरणलसत्केसरालीकरालः
प्रत्यग्रालक्तकाभाप्रसरकिसलयो मञ्जु मञ्जीरभृङ्गः ।
भर्तुर्नृत्यानुकारे जयति निजतनुस्वच्छलावण्यवापी-
सम्भूताम्भोजशोभां विदधदभिनवो दण्डपादो भवान्याः ॥"

पश्चाद्वर्त्तिनस्तुलसी-सूर-रहीम-पन्त-प्रसादादयो हिन्दीभाषाकवयोऽपि संस्कृतसाहितीमनुसरन्तो बाहुल्येन कमलकुन्दचम्पकादिकुसुमनामानि प्रयुञ्जते स्वस्वकाव्येषु । तुलसीदासस्तु सर्वाधिक्येन कञ्जकमलपरागादिशब्दान् व्यवहृतवान्—

"वन्दौं गुरु पद पदुम परागा । सुरुचि सुवास सरस अनुरागा ।।" ( रामचरितमानस बाल काण्ड )

"रावन शिर सरोज वन चारी । चलि रघुवीर शिली मुखधारी ॥" ( लङ्काकाण्ड )

"उदितउदयगिरि मञ्च पर रघुबर बाल पतङ्ग ।
विकसे सन्त सरोज सब हरषे लोचन भृङ्ग ॥" ( बालकाण्ड )

अत्र विश्वामित्रस्य गुरोर्वचनं परिपालयन् सीतास्वयंवरावसरे जनकप्रतिज्ञां सफलयितुं भगवान् श्रीरामचन्द्रः सभामञ्चस्थादासनादुत्तस्थौ तदा सर्वे सन्तस्तुतुषुः । इति वर्णयन्कविः कथयति यन्मञ्च एवोदयगिरिः । तत्र रघुवरबालपतङ्गो यदोदितस्तदा सज्जनसरोजानि विकसितानि तत्रोपस्थित-जनलोचनभृङ्गाश्च मुदं सम्प्राप्ता इति ।

रहीमकविः प्रतिपादयति कमलजलोदाहरणमुखेन यत्–प्रारब्धवशात्तदेव सुखदं वस्तु दुःखदं जायते । यथा जले स्थितं कमलं यो रविः पोषयति, जले शुष्यति स एव रविस्तत्कमलं शोषयति–

"पलटत ही प्रारब्ध के सुखद दुखद ह्वै जात ।
रवि पोषत शोषत वही जलजातहिं जल जात ॥"

भावुककविवरो जयशङ्करप्रसादः 'आँसू'नामके शोककाव्ये नायिकाया हास्यं वसन्तकालिक-प्रभातप्रसन्नं विकसितकमलवनवैभवं तिरस्करोतीति वर्णयति—

"विकसित सरसिजवन वैभव मधु ऊषा के अञ्चल में ।
उपहास करावे अपना जो हँसी देख ले पल में ॥"

नेपालदेशीया भाषाकवयोऽपि यथावसरं यथास्थानं कमलं वर्णयाम्बभूवुः । कविशिरोमणिपदविभूषितो लेखनाथपौड्यालनामा कविः 'ऋतुविचार' नाम्नि काव्ये कमलस्थितिं मनोहारितया वर्णयति । 'पङ्क एव भेको निवसति, पङ्क एव कमलं च विलसति । स्थानं तु सममेव, परन्तु गुणगतिस्तयोर्भिन्ना भवति । संसारमिदं पङ्कमस्ति, ईश्वरभक्तिः पद्मम् । जीवाः सर्वे मण्डूकाः सन्ति, पद्मस्य रसो मुक्तिरस्ति । जलाशयान्यविषयासक्तो मण्डूको यदि कमलरसं पातुं प्रभवेत्, कीटाद्याहारविहारमात्रकार्ये न रमेत्तर्हि स मुक्तो भवेत् । परन्तु सांसारिकजीवा वयं भेकवत् कमलरसं ( ईश्वरप्राप्त्यानन्दानुभवरसम् ) पातुं न पारयामः ! कीदृशी मार्मिकी दर्शनप्रकाशन-शैलीयं कवेः—

"संसार यो हिलो सारा, पद्म ईश्वरभक्ति हो । जीव छन् भ्यागुतातुल्य, पद्मको रस मुक्ति हो ॥"

इत्थं जलेषु स्थलेषु च कवयः श्रियमुपवर्णयन्ति प्रायशः । किञ्च नदीनां समुद्रस्य च जलेष्वपि ते जलजजालं विस्तारयन्ति— 'किं न पश्यन्ति कवयः ? '

अत्र न विस्मयः कार्यः । अयं तु कविसमय एव । कविसमयपरिचयो विश्वनाथकविराजेन दत्तः साहित्यदर्पणग्रन्थे—

'मालिन्यं व्योम्नि पापे यशसि धवलता वर्ण्यते हासकीर्त्योः ।
रक्तौ च क्रोधरागौ सरिदुदधिगतं पङ्कजेन्दीवरादि ॥"

एतावता प्रमुखकवीनां कमलेषु प्रीतिः समासेनात्र सङ्कलिता ।

— * —

# अभिनव-साहित्य-परिचयः

वैयाकरणसिद्धान्तकौमुदी ( कारकप्रकरणम् ) लेखकः—राजकिशोरमणित्रिपाठी गोरखपुरविश्वविद्यालये संस्कृतविभागेऽध्यापकः। प्रकाशकः—संस्कृत सेवा संस्थान, १३३ खुर्रमपुर ( गोरखपुर )। आकारः डिमाई। पृष्ठसंख्या-३७६। मूल्यम्—२० रु०।

वैयाकरणसिद्धान्तकौमुद्याः कारकप्रकरणं व्याख्यातं च विद्वद्वरेण श्रीराजकिशोरमणित्रिपाठिना पर्यवालोकि। कारकप्रकरणमधिव्याकरणशास्त्रं विवेचनप्रधानं प्रौढवैदुष्यव्याख्यानसापेक्षं, निखिलशास्त्रोपयोगि व्युत्पत्तिसमेधकं, प्रतिभाप्रकर्षकमित्यशेषविदुषामाकूतम्। नात्र संदेहो यद् विदुषा व्याख्यात्रा कृतोऽत्र फलवान् श्रमः। विस्तृतभाष्यात्मकेन व्याख्यानेन स्फोरितानि निखिलानि गूढतत्त्वानि, निपुणतया व्याख्यातानि कठिनस्थलानि, न न स्पृष्टान्येव कठिनस्थलान्यपि तु वैशद्येन स्फुटीकृतानि तत्रत्यानि तत्त्वानि, येन प्रपाठकानां कृते नावशिष्येत संदेहलेशोऽपि कथञ्चन। दृष्टिविकासाय, प्रतिभाप्रकर्षाय च प्रस्तुतीकृतानि नवीनान्यनेकानि काव्यगतानि पद्यमयान्युदाहरणानि।

व्याख्यानेऽत्र विषयाणां तादृशमस्ति प्रस्तुतीकरणं येन जिज्ञासोः पुरस्तात् कीदृशमपि काठिन्यमसमाहितं नावतिष्ठते। एवं प्रथमतया प्रातिपदिकार्थसूत्रस्य व्याख्यानं कुर्वता व्याख्यात्रा—किमिदं प्रातिपदिकं कश्च प्रातिपदिकार्थः ? प्रातिपदिकार्थत्वादेव सिद्धे लिङ्गग्रहणस्य किमौचित्यमित्यादयो विषया निगदव्याख्याताः।

परिमाणमात्रे द्रोणो व्रीहिरित्युदाहरणप्रसंगे दीक्षितेन लिखितं—प्रत्ययार्थे परिमाणे प्रकृत्यर्थोऽभेदेन संसर्गेण विशेषणं, प्रत्ययार्थस्तु परिच्छेद्यपरिच्छेदकभावेन व्रीहौ विशेषणम्। स्थलमिदं स्पष्टीकुर्वता व्याख्यात्रा—कथमत्राभेदसम्बन्धेन कथं च परिच्छेद्यपरिच्छेदकभावसम्बन्धेनान्वय इत्यादयो विषयाः सम्यक् स्फोरिताः। तावताऽपि—कर्तुः कि—माषेष्वश्वं बध्नाति इत्यस्याः पंक्तेः व्याख्यानावसरे कर्तृग्रहणाभावे कर्मण ईप्सितानां माषाणां कर्मत्वमापाद्य कर्तृग्रहणद्वारा तन्निराकृत्यापि नेदं समाहितं यद् यदा पुष्ट्यर्थं माषक्षेत्रे अश्वं बध्नाति इत्येतादृशतात्पर्यकमिदं वाक्यं स्यात् तदा अश्वो मद्वृत्तिव्यापारेण रज्जुशंकुदृढतरसंयोगाश्रयीभूतो भवतु, माषाश्चाश्वस्य गलविलाधःसंयोगाश्रयीभूता भवन्तु, इत्याकारिकायां कर्तुरिच्छायां सत्यां माषाणां कथं न कर्मत्वम् ? कर्तृग्रहणसामर्थ्यात् प्रकृतधात्वर्थफलाश्रयस्यैव तदिति समाहितं चेदतीव तत्र स्याद् वैशिष्ट्यम्।

एवं तमप् ग्रहणं कि—पयसा ओदनं भुङ्क्ते। इत्यत्र तमबर्थप्रकर्षस्य दीक्षितमते प्रकृत्यर्थतावच्छेदकेऽन्वयः, नागेशमते तु प्रकृत्यर्थतावच्छेदकेऽन्वयः। तेनोभयोः फलवैभिन्न्यमपीत्यादयो विषया-

स्तत्र विवेचिताः स्युस्तदा स्याद् ज्ञानवर्धनं जिज्ञासूनामामोदश्च विदुषाम् । नागेशादिभिर्व्याख्यातविषया नात्रोल्लिखिताश्चेदुद्वेजकतयेति चेन्नात्र संशयो यद् व्याख्यानमिदं कारकप्रकरणस्य सर्वथैवापूर्वमुपयोगि च सर्वेषाम् । सर्वथैव कृतिनोऽत्र व्याख्यातारोऽध्यापयितारश्चाधिगतयाथातथ्या नूनमुपकरिष्यन्तीति मे मतिः ।

विश्वनाथ मिश्रः

प्राचार्यः—शार्दूलसंस्कृतविद्यापीठम्, बीकानेर ।

**संस्कृतसरणिः** लेखकः—डा० रामलखन शर्मा । प्रकाशकः— प्रशान्त प्रकाशन ५८ छित्वापुर रोड, लखनऊ । आकारः—डिमाई । पृष्ठसंख्या—३७५ । मूल्यम्—१२ रूप्यकाणि ।

एतद्ग्रन्थलेखकाः डा० शर्माणः शिक्षाशास्त्रे कृतभूरिपरिश्रमा विश्रुता विद्वांसः सन्ति । एभिः पुस्तकेऽस्मिन् सुदीर्घकालीनं संस्कृतशिक्षणानुभवमाधृत्य वर्णपरिचयादारभ्य संस्कृव्याकरणसम्बद्धाः सर्वेऽपि विषया राष्ट्रभाषायां सम्यक्तया विवेचितातस्था संस्कृते प्रविविक्षूणां छात्राणां हितदृष्ट्या सुस्पष्टतया निरूपिताश्च । व्याकरणविषयनिरूपणानन्तरं १५ छन्दसां तथा २० अलङ्काराणां च लक्षणोदाहरणान्यपि प्रदर्शितानि । अन्ते २७ विषयानधिकृत्य निबन्धा अपि सरलसरसभाषया उपनिबद्धा विद्यन्ते । एवञ्च पुस्तकमिदं हिन्दीमाध्यमेन संस्कृतमध्येतुमिच्छतां प्रौढजनानां तथा संस्कृतछात्राध्यापकानाञ्चापि परमोपकारकमिति संस्कृतसमाजे सर्वथा सम्मानमर्हति ।

—सहसम्पादकः

**शब्ददीपिका** ( नूतनं संस्कृतव्याकरणम् ) लेखकः—डा० वि० आर० शास्त्री, हैदराबादस्य उस्मानिया विश्वविद्यालये संस्कृतविभागाध्यक्षः, प्रकाशकः—अमरभारतीप्रकाशनम्, १-१-३३६।९३, विवेकनगर, हैदराबाद २० आन्ध्रप्रदेशः । आकारः—डिमाई । पृष्ठसंख्या—३२३ । मूल्यम्—२२ रूप्यकाणि ।

संस्कृतभाषायाः संस्कृतमाध्यमेन शिक्षकमिदं पुस्तकम् । पुस्तकेऽस्मिन् यद्यपि अन्यसंस्कृतशिक्षकपुस्तकानामिव सरणिमनुसृत्य सर्वे व्याकरण-सम्बन्धिनो विषया बोधितास्तथापि केषुचित् प्रकरणेषु "नूतनं संस्कृतव्याकरणम्" इति सूचनानुसारं नूनं काचिन्नवीनताऽपि परिलक्ष्यते । पुस्तकस्यास्य क्रियाकलापप्रकरणम्, विधायकप्रकरणम्, कर्मप्रवचनीयप्रकरणम्, समुच्चयप्रकरणम्, भावप्रकरणम्, परिचितिप्रकरणम् वाक्यप्रकरणञ्चेत्यादीनि प्रकरणानि किमपि नूतनं ज्ञानं, नूतनां बोधशैलीं च समुपस्थापयन्ति । वाक्यप्रकरणे परिचितिप्रकरणे च वाक्यगतानां पदानां तथोपवाक्यानां च यादृशं निरूपणं विहितं तद् छात्राणां कृते नूतनं बोधं ददाति । संस्कृताध्यापकैश्छात्रैश्च पुस्तकमिदं नूनमवलोकनीयं पठने पाठने च उपयोक्तव्यमिति ।

—सहसम्पादकः

वाणीसरोवर ( त्रैमासिकी ) सम्पादकः—श्री नन्दकुमार अवस्थी, प्रकाशनस्थलम्—भुवनवाणी ट्रस्ट, लखनऊ। पृष्ठसंख्या—१९२ । वार्षिकं मूल्यम् १० रु० । एकस्याङ्कस्य मूल्यम् —२-५० रु०

पत्रिकाया अस्या एकादशवर्षस्यायं चतुर्थोऽङ्को मत्समक्षं विराजते। एतत्पत्रिकाया अनन्य-पत्रिकासाधारणः कश्चिद् विशेषो वर्तते। अस्यां पत्रिकायां समस्तभारतीयभाषाणां प्राचीन-प्रतिनिधिकाव्यग्रन्थानां क्रमिकरूपेण नागराक्षरेषु प्रकाशनं भवति तथा तेषां हिन्दीभाषानुवादोऽपि प्रकाशितो भवति। एतदतिरिक्तं अरबी-फारसी-उर्दू-अंग्रेजी ग्रन्थानामपि सानुवादं नागराक्षरेषु प्रकाशनं विधीयते। मानसभारतीनाम्ना तुलसीकृतरामायणस्य संस्कृतपद्यानुवादोऽपि क्रमशः प्रकाश्यमानो विद्यते। एवञ्च ये साहित्यरसिका जना विभिन्नलिपीनां ज्ञानाभावे नागराक्षरद्वारा अन्यभारतीयभाषाणां साहित्यस्य अध्ययनं कर्तुं कामयन्ते तथा हिन्दी-अनुवाद-माध्यमेन अर्थमपि ज्ञातुमिच्छन्ति तेषां कृते पत्रिकेयं परमसहायिका भवितुमर्हति। समस्तभारतीयभाषाणां पारस्परिक-परिचयप्रसारदृष्ट्या पत्रिकाया अस्याः सुमहत् राष्ट्रीयं महत्त्वं विद्यते। एतादृशपत्रिकायाः सम्पादकाः प्रकाशका ग्राहकाश्च सर्वेऽपि अस्माकं नितरां वन्दनीया अभिनन्दनीयाश्चेत्यत्र नास्ति काचिदतिशयोक्तिः। हिन्दीप्रदेशेषु वयं गृहे गृहे अस्याः प्रचारं कामयामहे।

सहसम्पादकः

तत्त्वशतकम्—रचयिता—डा० ब्रह्मानन्दशर्मा, राजस्थानप्राच्यविद्याप्रतिष्ठानस्य भूतपूर्व-निदेशकः। प्रकाशकः—ब्रह्मानन्दशर्मा, पारसी मन्दिर के पास, नसीराबाद रोड, अजमेर, राज०। मूल्यम्—२ रु०।

एतस्मिन् पुस्तके नामानुसारमेव केषुचित् शास्त्रीयविषयेषु केषुचित् लौकिकेषु च विषयेषु रचयित्रा महानुभावेन केचन स्वानुभूतास्तात्त्विका विचारा अनुष्टुप्छन्दस्सु उल्लिखिताः सन्ति। आकृत्या लघ्वपि पुस्तकमिदं विषयदृष्ट्या विचारदृष्ट्या च नितरां गभीरं नवीनदृष्टिप्रदं चेति नूतन-रचनाप्रवीणैरवश्यमेव द्रष्टव्यं संग्राह्यं च। श्लोकानां हिन्दीभाषानुवादोऽपि ग्रन्थान्ते प्रदत्तो वर्तते।

———

## समीक्षणार्थं प्राप्तानि पुस्तकानि

१. मन्दाकिनी, श्रीभाष्यं विजयसारथिः, वारंगल, आन्ध्रप्रदेश ।

२. राजस्थानस्याधुनिकाः कथालेखकाः, डा० पुष्करदत्तशर्मा, उदयपुर, राजस्थान ।

३. प्रसन्नाञ्जनेयं नाम हनुमत्सन्देशः, डा० अर्क सोमयाजी, तिरुपति, आन्ध्रप्रदेश ।

४. सुभाषितसुमनोऽञ्जलिः, मिथिलेशकुमारी मिश्रा, पाटलिपुत्रम्, विहारप्रदेशः ।

५. मेघदूत ( हिन्दी पद्यानुवाद ), डा० अभयमित्र इलाहाबाद, उत्तरप्रदेशः ।

६. कादम्बरीनाटकम्, भोजमणिशुक्लः, कुशीनगर, देवरिया, उत्तरप्रदेशः ।

७. विक्रान्तभारतम्, डा० वी० आर० शास्त्री, हैदराबाद, आन्ध्रप्रदेशः ।

८. काव्यसत्यालोकः, डा० ब्रह्मानन्दशर्मा, अजमेर, राजस्थान ।

९. अभिनवा स्तुतिः, राजकिशोरमणित्रिपाठी, गोरखपुर, उत्तरप्रदेशः ।

१०. देवीशतकम्, वि० सुन्दरशर्मा, हैदराबाद, आन्ध्रप्रदेशः ।

●

निवेदना—स्वासां नूतनकृतीनां परिचयाय समालोचनाय चाभिनवसाहित्यप्रणेतृभिरेकैकस्य पुस्तकस्य प्रतिद्वयं प्रेषणीयमिति सानुरोधं निवेद्यते ।

●

शोकसमाचारः

## प्रधानसम्पादकमहोदयस्य भ्रातृद्वयवियोगः

परमार्थसुधायाः परिवारस्य कृते महतो दुःखस्यायं विषयो यत् प्रधानसम्पादकानां श्रीशर्ममहोदयानां द्वयोः भ्रात्रोरल्पकालव्यवधान एव दिवङ्गमनं जातम् । अनयोर्ज्येष्ठभ्राता श्रीपण्डितरामेश्वरशर्मा ज्यौतिषकर्मकाण्डशास्त्रयोर्महान् निष्णातः तथा रांचीनगरस्य विद्वत्सु संभ्रान्तनागरिकेषु च लब्धप्रतिष्ठो यशस्वी विद्वान् आसीत् । कनिष्ठभ्राता श्रीमुरारीलालशर्मा रांचीनगरस्थमारवाड़ीकालेजस्य प्रधानाचार्यस्तथा लोकप्रियः समाजसेवी चासीत् । अनयोर्द्वयोरपि लोकसम्मानितयोः गृहसंचालनदक्षयोश्च भ्रात्रोरल्पकालाभ्यन्तर एव वियोगेन भृशं दुःखितान् श्रीशर्ममहोदयान् प्रति हार्दिकीं समवेदनां प्रकटीकुर्मस्तथा दिवङ्गतयोर्द्वयोरपि महानुभावयोः शाश्वतिकीं शान्तिं सद्गतिञ्च कामयामहे ।

वासुदेवद्विवेदी शास्त्री
पत्रिकापरिवारसदस्याश्च

भारतस्य प्रतिष्ठे द्वे

संस्कृतं संस्कृतिस्तथा।

★

निखिलेऽपि महीमण्डले

संस्कृतभाषा-साहित्य-प्रसाराय

# भारत लक्ष्मी ट्रेडिंग कम्पनी

प्राइवेट लिमिटेड, कलकत्ता

★

इति संस्थानेन

श्रद्धा-भक्ति-प्रसूनानि विनिवेद्यन्ते

# पुनर्जीवनम्

(१)

शतं जीव शरदो वर्धमानः, शतं हेमन्ताञ्छतमु वसन्तान् ।
शतमिन्द्राग्नी सविता बृहस्पतिः, शतायुषा हविषेमं पुनर्दुः ॥

(२)

आहर्षं त्वाऽविदं त्वा, पुनरागाः पुनर्नव ।
सर्वाङ्ग सर्वं ते चक्षुः, सर्वमायुश्च तेऽविदम् ॥

(३)

अङ्गादङ्गाल् लोम्नो लोम्नो, जातं पर्वणि पर्वणि ।
यक्ष्मं सर्वस्मादात्मनस्, तमिदं वि वृहामि ते ॥

(४)

आरभस्वेमाममृतस्य श्नुष्टिम्, अच्छिद्यमाना जरदष्टिरस्तु ते ।
असुं त आयुः पुनराभरामि, रजस्तमो मोप गा मा प्रमेष्ठाः ॥

(५)

जीवतां ज्योतिरभ्येह्यर्वाङ्, आ त्वा हरामि शतशारदाय ।
अवमुञ्चन् मृत्युपाशानशस्तिं, द्राघीय आयुः प्रतरं दधामि ॥

ऋग्वेदात् १०/१६१/४-५